पद्मविभूषण डॉ. माधव श्रीहरी अणे



[ जन्म : २९ ऑगस्ट १८८० मृत्यु : २६ जानेवारी १९६८ ]

अणेवंशोद्भवेन श्रीहरिसूनुना माधवेन विरचितः

# श्रीतिलकयशोऽर्णवः

## द्वितीयः खण्डः

48643



संपादकमण्डलम्

अध्यक्षः

रा. ना. दांडेकर

सदस्याः

वि. प्र. लिमये | मा. पं. सोमण
रा. ना. गद्रे | गणेशशास्त्री लेले


तिलक-महाराष्ट्र-विद्यापीठम्, पुण्यपत्तनम्

१९७०

# ŚRĪTILAKAYAŚO'RṆAVAḤ

BY

MADHAVA SHRIHARI ANEY

VOLUME II



TILAK MAHARASHTRA VIDYAPEETH

POONA

1970

# श्रीतिलकयशोऽर्णवप्रकाशनसमितिः

अध्यक्षः

द. वा. पोतदार

कार्याध्यक्षः

ह. वि. पाटसकर

सदस्याः

| | |
|---|---|
| मोरारजीभाई देसाई | यशवंतराव चव्हाण |
| वसंतराव नाईक | र. के. खाडिलकर |
| चिं. द्वा. देशमुख | प्र. बा. गजेंद्रगडकर |
| कन्हैयालाल मुनशी | प्रेमलीलाबाई ठाकरसी |
| वि. भि. कोलते | रामराव देशमुख |
| ब. दा. जत्ती | वि. प्र. लिमये |
| रा. ना. दांडेकर | ग. त्र्यं. देशपांडे |
| श्री. भा. वर्णेकर | ज. श्री. टिळक |
| भा. म. गुर्से | म. स. पारखे |
| रा. ग. हर्षे | बे. रा. शर्मा |

द. मा. अणे

कोषाध्यक्षः

शं. न. आगाशे

कार्यवाहाः

ना. श्री. सोनटक्के

वा. त्र्यं. आपटे

शि. ह. धुपकर

# अनुक्रमणिका

# संपादकमण्डलस्य निवेदनम्

१. प्रथमखण्डस्य संपादकीयं निवेदनम् अस्माभिः एवम् उपसंहृतम् आसीत्–'यदि अल्पीयसी इयं कृतिः विदुषां परितोषाय भवेत्, तर्हि अवशिष्टं कार्यं–न यत् सुकरमिव–पुनरपि अङ्गीकर्तुं संपादकमण्डलं लब्धोत्साहं संपत्स्यते। क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति। निवेदयितुमेतत् प्रसीदति नश्चेतः, यद् आसीद् अस्माकं कृतिः विदुषां परितोषाय। अनुभूतं सर्वतः सानन्दम् अभिनन्दनं श्रीतिलकयशोऽर्णवस्य प्रथमेन खण्डेन। लब्धं लब्धव्यं फलम्। तेन च व्यपगतक्लेशैः, नवीभूतैः, लब्धोत्साहैश्च अस्माभिः प्रारभ्यत अग्रिमं कार्यम्। अद्य इमं द्वितीयं खण्डं जनताजनार्दनाय अर्पयद्भिर् अस्माभिः कोऽपि आनन्दविशेषः अनुभूयते।

२. यत्सत्यम् विद्वद्भिर् अस्य काव्यरत्नस्य यत् मुक्तकण्ठं स्वागतं व्याहृतम्, यच्च जनतया सर्वात्मना सोल्लासम् अनुमोदनं कृतम्, सर्वं तद् अस्माकं मनोरथानामपि अभूमिः आसीत्। तथा हि–कश्चिद् अत्र काव्ये कविना प्रदर्शितं नवनवानां शब्दानां निर्माणकौशलं प्रशंसति। कश्चित् प्राचीनकाव्येषु पौनःपुन्येन प्रयुक्तत्वात् गतरसेभ्यः उपमादिभ्यः उद्वेजितः सचेताः अत्रत्यां तद्विषयकां प्रत्यग्रतां स्तौति। कश्चित् कवेः शब्दचित्रकौशलेन विस्मयते। कंचित् तत्रस्था सुभाषितप्रचुरता आह्लादयति। कश्चिद् आदर्शवादी तत्र उपस्थापितं कथानायकस्य धीरोदात्तम् आदर्शभूतं चरितं बहु मन्यते। संस्कृतमाध्यमस्य अखिलभारतीयता राष्ट्रियतामनस्कान् आवर्जयति। संस्कृतानुरागिणः अत्र संस्कृतभाषायाः जीवत्तायाः, तस्याश्च नवनवोन्मेषक्षमतायाः प्रमाणानि उपलभन्ते। सर्वे एव तु काव्यस्य प्रसादजनितं सुबोधत्वम् अङ्गीकुर्वन्ति, 'श्रीतिलकयशोऽर्णवो नाम संस्कृतेतिहासे आधुनिके च संस्कृतजगति एको महान् व्यतिकरः' इति च अभिप्रयन्ति।

तथा हि। एवं हि लिखति कश्चित् समालोचकः —

लोकनायकानाम् अणेमहोदयानां विद्वत्त्वं कर्तृत्वं च सर्व एव जानाति। तेषां कवित्वस्य परिचयस्तु तिलक-महाराष्ट्र-विद्यापीठेन गते जूनमासि प्रकाशितेन श्रीतिलकयशोऽर्णवः इत्याख्येन महाकाव्येन अधुनैव भवति। योऽयं प्रकाशितः स काव्यस्य प्रथमः खण्डो वा, खण्डकाव्यस्य प्रथमाविष्कारो वा इति संभ्रान्तं भवति मनः।

अस्य काव्यस्य सहजसुबोधया सरण्या हृदि कृतपदः कश्चित् समालोचकः इत्थं स्वाशयं प्रकाशयति—

इदं च विशिष्य वक्तव्यम्, यद् एतत्काव्यपठनवेलायाम् आदिकवेर् वाल्मीकेः ओघवती काव्यकौशललीला स्मृतिमायाति। कामम् अद्यापि भूयान् भागः प्रकाशयितव्योऽस्ति। यस्तु हस्ताभ्यासम् उपगतोऽस्ति, अवश्यमेव सः तद्विषयकम् अनल्पं कौतूहलं समुत्थापयति।

लोकनायकानां प्राचीनप्रवणताम् उद्दिश्य कश्चिल्लिखति—

विश्रुतं हि अणेमहोदयानां संस्कृतवैदुष्यम्। प्रकामं पीतमासीत् तैः प्राचीनात् ज्ञानविज्ञानस्रोतसः। अतो नात्र किमपि चित्रं यद् आधुनिकानां वृत्तान्तानां चित्राङ्कनसमयेऽपि तेषां प्रातिभं चक्षुः पौराणान् प्रसङ्गान् उत्प्रेक्षते। ...... अस्य काव्यस्य अयं खलु विशेषः, यद् अस्मत्कालिकस्य महतो राष्ट्रभक्तस्य कर्मयोगिणश्च जीवनपटः अत्र मनोरमया शैल्या आविष्कृतोऽस्ति।

लोकनायकानां भाषालङ्कारविषये अयमेकोऽभिप्रायः—

प्रसादगुणः बापूजीनां सर्वमेव काव्यं व्याप्य स्थितोऽस्ति। सामान्यसंस्कृतज्ञानवानपि पुरुषः तद् अनायासेन पठितुं प्रभवेत्। 'बापूजीनां स्वभावोक्तिः' इति वक्तुं शक्यम्। ... अतिपरिचयाद् यातयामाः, पारंपरिके संस्कृतकाव्ये च भूयो भूयो दृश्यमानाः कल्पनाः परित्यज्य नवीनानि उपमानानि प्रयुञ्जानैः तैः परिचायिताऽस्ति निजा नवनवोन्मेषशालिनी प्रतिभा। ... उपयुक्ताः सन्ति तैः अनेके स्वोपज्ञाः शब्दाः, यथा आरात्रिकम्, गुरुवेत्रचतुष्पदी, प्रस्तरचत्वरः, श्रवणतारिका, पंचजनी, अङ्गरक्षा, इत्यादयः। परिणमिताश्च सन्ति संस्कृतभाषया अनेके आङ्ग्ल-मराठी-भाषिकाः आभाणकाः। ... अस्य काव्यस्य संस्कृते प्रणीतत्वात् आङ्ग्लभाषानभिज्ञाः मराठीतरभाषका अपि लोकमान्यानां देदीप्यमानेन जीवनेन परिचिता भविष्यन्ति, गच्छता कालेन च रूपान्तरं प्राप्तास्वपि देश्यभाषासु संस्कृतस्य पाणिनिसूत्रबद्धत्वेन तेन साकम् अयमपि ग्रन्थः स्थिरपदो भविष्यति।

एतत्काव्यजनितं सविस्मयम् आनन्दं प्रकटय्य तत् कल्हणकाव्येन उपमिमानः कश्चिद् विद्वान् एवं ब्रवीति—

न केवलं विस्तारः अस्य काव्यस्य विशेषः, किं तु आशयोऽपि। अत्र कथा तालबद्धया गत्या अनायासरमणीयं प्रस्यन्दते। वागोघः न कुत्रापि स्खलति, रुध्यते वा। ... आधुनिकतमाः तान्त्रिक्यः संज्ञाः, पाश्चात्त्यानां वा नामानि तथा संस्कारमृष्टानि सन्ति, यथा संस्कृतेन सह तेषां सात्म्यमिव संजातमस्ति। उत्सव एव कश्चित् एतत्काव्यपठनं नाम। यद्यपि इदम् आधुनिके काले निष्पन्नम्, नात्र किमपि हीयते

प्राचीनकाव्यानां गुणसंपदः। ... सर्वेषु संस्कृतकाव्येषु अस्य किमपि उन्नततरं स्थानं भविष्यति इत्यत्र न मे कोऽपि संदेहः।

विस्तारभयाद् अधुना एक एव अभिप्रायः अंशतः उद्ध्रियते—

संस्कृतभाषायां बापूजीनां न केवलं भक्तिः आसीत्, किं तु अधिकारोऽपि। ग्रन्थारम्भे एव तैः लोकमान्यानां

रक्तोष्णीषं शिरसि रुचिरं, चन्दनाङ्कं च भाले
हस्ते यष्टिं, तुहिनधवलामङ्गरक्षां शरीरे।
स्कन्धाज्जानूपरि विलसितं चोत्तरीयं दधानं
बालं भव्यं तिलककुलजं लोकमान्यं नमामि॥

इति मनोरमं शब्दचित्रम् आलिखितमस्ति। कतिपयैरेव तूलिकाक्षेपैः चित्रम् आविष्कुर्वतः चित्रकारस्य कौशलं प्रकटीकृत्य लोकनायकाः वाचकं यद् उपक्रमे एव वशीकुर्वन्ति, तद् अपुनर्मोचनाय... दृढविचारस्य पुरुषस्य भाषणं सुभाषितायते। उभयोरपि लोकमान्य-लोकनायकयोर् विषये इदम् अवितथम्। अत एव अस्मिन् काव्ये 'संधारणाय धर्मस्य शिक्षणं विहितं भवेत्', 'अज्ञानं पारतन्त्र्यस्य ज्ञानं मोक्षस्य कारणम्', 'न सौख्यं न च संमानं लभते परवाञ्जनः' इत्येतदादीनि सुभाषितानि प्राचुर्येण उपलभ्यन्ते। आदर्शभूताः प्राध्यापकाः 'निपुणाः शास्त्रविज्ञाने पटवः शास्त्रशोधने' सन्ति। लोकमान्यानां साधननीतिः 'घटनाश्रितमार्गेण साधनानामुपाश्रयः' इति सूत्रिताऽस्ति।... एतत्काव्यरचनया अनेके लाभाः संपन्नाः। एकेन आदर्शचरितेन पुनरुज्ज्वालनं लब्धम्। सामर्थ्यसुबोधादिसंपन्नम् एकं नवीनं संस्कृतकाव्यं जगता लब्धम्। संस्कृतभाषायाः अनुपहतचैतन्यस्य अन्यदेकं प्रभावि चिह्नं लब्धम्। लब्धश्चैको वस्तुपाठः—कथं खलु आधुनिकभाषागताः विचाराः वाक्प्रयोगाश्च संस्कृतेन आत्मसात्कर्तव्याः इत्यस्य।

श्रीलोकमान्यः तिलकः यस्य कवनीयो विषयः, लोकनायकाः अणेमहोदयाः कवयितारः, संस्कृतं च कवनभाषा, स 'श्रीतिलकयशोऽर्णवः' यद्येवं स्नेहनिर्भरं सभाजनं नान्वभविष्यत्, तर्ह्येव आश्चर्यम् अभविष्यत्। साधु खलु कश्चित् समालोचकः अभिप्रैति—

लोकमान्यस्य चरितं लोकनायकवर्णितम्।
अलौकिकायां भाषायां को न ब्रूयादलौकिकम्॥

३. 'अर्णव'स्य प्रथमखण्डस्य प्रकाशनोत्तरम् अचिरमेव द्वितीयखण्डस्य संपादकीयं कार्यम् अस्माभिः प्रारब्धम्। प्रकाशनसमारोहश्चायं पुण्यपत्तने ८-६-६९ दिने केन्द्रीय-शिक्षामन्त्रिणां डॉ. व्ही. के. आर. व्ही. रावमहोदयानां करकमलाभ्यां समपद्यत। महत्या यशस्वितया संपन्ने-

ऽस्मिन् समारोहे अभिरूपः सारभूतः पुण्यपत्तनीयो जनः उपातिष्ठत। अनेन प्रकाशनसमारोहेण संस्कृतविषये काऽपि नूतन 'वातावरण-' निर्मितिरिव संपादिता, कोऽपि आस्थाविशेषो जागरितः।

४. या संपादकीया नीतिः प्रथमखण्डे अस्माभिः उपन्यस्ता, सा अस्मिन्नपि खण्डे तथैव अनुवर्तिताऽस्ति। तदनुसारेण मूललेखे ये व्याकरणविषयकाः, छन्दोविषयका वा अवश्यशोधनीयाः प्रमादा आसन्, ते एव अस्माभिः संशोधिताः। अन्यत्र तु लोकनायकैर् लिखितं यथा-स्थितं मूलमेव मुद्रितमस्ति। न तु एतावता संपादकमण्डलस्य कार्यभारः कश्चित् सुकर आसीत्। आनुषङ्गिकतया खलु कथितमस्तु अत्र एतद् यद् अस्य द्वितीयखण्डस्य केवलं सुसंपादितां मुद्रणयोग्यां प्रतिलिपिम् उपकल्पयितुं संपादकमण्डलस्य प्रत्येकं द्विहोरायतानि उपपञ्चाशानि मेलनानि आवश्यकानि आसन्। निवेदितम् अस्त्येव अस्माभिः पूर्वम्, यत् लोकनायकैः शय्याशरणैः उरोनिहितपत्रे लेखनकर्म कृतम्, न च लब्धस् तैः संस्करणार्थः समयः, इति। अतः बहुषु स्थलेषु अक्षरनिर्णयः कर्तव्य आसीत्, तदसंभवे वा 'किं नु लोकनायकानां विवक्षितं स्यात्' इति तर्केण उन्नेयमासीत्।

५. पूर्वखण्डापेक्षया अयं खण्डः अल्पाकारः। आशयतस्तु अयमपि गरीयान्, यतः लोकमान्यैः कृतः टाइम्स ऑफ इण्डिया तथा च ग्लोब इत्येतयोर् आङ्ग्लपत्रयोर् दर्पभङ्गः, ताईमहाराज-प्रकरणम्, वङ्ग-भङ्गान्दोलनम्, लोकमान्यानां चतुःसूत्रीप्रणयनम्, सुरतनगरीयं कुविख्यातं राष्ट्रसभाधिवेशनम्, अरविन्दघोषमहोदयानां राजकारणनभो-मण्डले उदयः, अविस्मरणीयः स न्यायालयीनः अभियोगः, मण्डाले इत्यत्र लोकमान्यानां निर्वासनम्, तत्र गीतारहस्यविरचनम्, अन्ततश्च मुक्तानां तेषां पुनरागमनम्, इत्येते लोकमान्यानां जीविते ये महत्त्वपूर्णा वृत्तान्ताः ते अस्मिन् खण्डे उपवर्णिताः सन्ति। इममपि खण्डं जनता पूर्व-वत् सानन्दम् अभिनन्देत् इत्यत्र नास्ति अस्माकं कोऽपि संशीतिलेशः।

६. संस्कृतस्य अमरगौरवे वर्तमानेन अस्माकं विश्वासेन आहित-बलाः, लोकमान्य-लोकनायकयोर् आशीर्वचःसु निश्चितमनस्काः, सुहृत्-सहकारिणां सहजस्फूर्तेन गुणग्रहणेन निरुपाधिभिश्च शुभाशंसनैः प्रोत्साहिताः एते वयं संप्रति महाशयस्य सतोऽपि विघ्नबहुलस्य अस्य 'अर्णव'स्य यात्रायाः अन्तिमप्रयाणकार्थं पोताधिरोहणं कुर्मः।

---

# श्रीतिलकयशोऽर्णवः

## द्वितीयः खण्डः

---

# छायाचित्रानुक्रमः

क्रमाङ्कः

# ॥ श्रीतिलकयशोऽर्णवः ॥

## द्वितीयः खण्डः

## षड्विंशस्तरङ्गः

नत्वा सरस्वतीं देवीं गणेशं विघ्नवारणम् ।
शिवं विष्णुं च सूर्यं च ग्रन्थारम्भं करोम्यहम् ॥ १ ॥

चरितस्य प्रारभेऽहं तिलकस्य रसप्रदम् ।
द्वितीयं स्फूर्तिदं खण्डं मुमुक्षुपथदर्शकम् ॥ २ ॥

आकौमारकथोद्घातं पूर्वखण्डेऽस्ति वर्णितम् ।
चरितं तीर्थयात्रान्तं तिलकस्य महात्मनः ॥ ३ ॥

ग्रन्थादौ नवखण्डस्य दिग्जयस्य कथां शुभाम् ।
वर्णयेऽहं मङ्गलार्थं रघुनाथस्य धीमतः ॥ ४ ॥

वेदाध्यायी शुचिर्भूतः पुरुषोत्तमसंज्ञकः ।
रत्नागिरिप्रदेशस्य कोङ्कणेऽम्बुनिधेस्तटे ॥ ५ ॥

रघुनाथः सुतस्तस्य विद्याप्राप्त्यै च मुम्बईम् ।
कर्वेवंशप्रदीपेन नीत आप्तेन धुण्डिना ॥ ६ ॥

पूजितो भारतेऽब्देऽस्मिन् धुण्डिर्यो मुनिसत्तमः ।
वर्षे शततमे येन कृतं नूनं पदार्पणम् ॥ ७ ॥

प्राप्ताचार्यपदो धुण्डिः पुणेविद्यालये नवे ।
सहितो रघुनाथेन संप्राप्तः पुण्यपत्तनम् ॥ ८ ॥

रघुनाथो यशो लेभे परीक्षासु महत्तमम् ।
प्रथमं प्रथमश्रेण्यां नित्यं पदमवाप सः ॥ ९ ॥

दृष्ट्वाचार्यगणस्तस्य प्रावीण्यं गणितेऽद्‌भुतम् ।
प्रेषयामास केंब्रीजमुच्चज्ञानाभिलाषिणम् ॥ १० ॥

संपादितं प्रेम शीघ्रं तेन बुद्धिप्रभावतः ।
गुरूणां गुरुबन्धूनामभूत् प्रियतमो हि सः ॥ ११ ॥

विद्यापीठपरीक्षायां समुत्तीर्णोऽतिबुद्धिमान् ।
लेभाते द्वौ पदं श्रेष्ठं तुल्यप्रज्ञागुणान्वितौ ॥ १२ ॥

वरिष्ठं रांग्लरपदं संप्राप्तं तीव्रबुद्धिना ।
विश्वविख्यातशास्त्रज्ञश्रेण्यां स पदमादधे ॥ १३ ॥

व्हाइस्रायपदस्थेन कर्झनेनाभिनन्दितः ।
पिता तस्य यतः पुत्रः प्राप्तवान् यश उत्तमम् ॥ १४ ॥

अभिमानास्पदं नाम रघुनाथस्य भारते ।
बुद्धिमत्ता भारतस्य तद्रूपेण प्रकाशिता ॥ १५ ॥

खैस्तेऽष्टानवतितमेऽब्देऽष्टादशशतोत्तरे ।
घोषितो रघुनाथस्य परीक्षायाश्च निर्णयः ॥ १६ ॥

शंसितं केसरीपत्रे रघुनाथयशो महत् ।
आसीत् तदग्रलेखस्य लेखकस्तिलकः स्वयम् ॥ १७ ॥

अभूद् भारतभूर्माता गणितस्येति विश्रुतम् ।
विनिर्मिते भारतीयै रीती बीजदशांशयोः ॥ १८ ॥

गर्गार्यभास्कराचार्यवराहमिहिरादयः ।
भारतप्रभवा एते गणितज्ञानसूरयः ॥ १९ ॥

शकाद्याक्रमणाज्जातं युगं घोरं तमोमयम् ।
प्ररोहाः शास्त्रवृक्षाणां प्रकाशेन विना मृताः ॥ २० ॥

परंपरा खण्डिता या गणितज्ञानिनां शुभा ।
कर्तव्यस्तत्समुद्धारो रघुनाथादिपण्डितैः ॥ २१ ॥

आगते रघुनाथे वै विदेशात् तिलकः स्वयम् ।
अगाद् निकेतनं तस्य कर्तुं तदभिनन्दनम् ॥ २२ ॥

विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
गुणी गुणवतां सत्यं कर्तुं शक्नोति गौरवम् ॥ २३ ॥

रघुनाथः समारूढः प्राचार्यपदमुत्तमम् ।
फर्ग्यूसनमहाविद्यालये पुण्यपुरीस्थिते ॥ २४ ॥

शिक्षाकार्यनिमग्नोऽपि स चित्तं राजकारणे ।
दधे तिलकपक्षस्य विरोधक इति स्थितः ॥ २५ ॥

अद्यापि वर्तते तस्य हृदये तिलकादरः ।
अभूद् वरिष्ठस्तिलको देशभक्तेषु भारते ॥ २६ ॥

असुराणां यथा शुक्रो देवानां च यथा गुरुः ।
भारतस्य तथा चासीदाचार्यस्तिलको महान् ॥ २७ ॥

रघुनाथो वदत्येवं वयसाशीतिवत्सरः ।
पुणेस्थविद्यापीठस्य यो वै कुलगुरुर्महान् ॥ २८ ॥

परांजपेकुलोद्भूतः पुरुषोत्तमनन्दनः ।
रघुनाथः शुद्धशीलः संयमी राघवोपमः ॥ २९ ॥

आशीर्भिः संप्रदत्ताभिर्विद्वद्भिस्तिलकादिभिः ।
संप्राप कृतकृत्यत्वं रघुनाथस्य जीवितम् ॥ ३० ॥

समाप्य तदुपाख्यानमिहैव कुतुकास्पदम् ।
तिलकस्य यशोगाथां प्रसन्नां गातुमारभे ॥ ३१ ॥

संपादनस्य दायित्वं स्वीकर्तुं काल आगतः ।
मत्वैवं केसरीपत्रधूर्धृता स्कन्धयोस्तदा ॥ ३२ ॥

दिने सप्तममासस्य तृतीये सोमवासरे ।
गत्वाधिकारिणः स्थानं लिलेख तिलकः स्वयम् ॥ ३३ ॥

अद्य चाङ्गीकृतं वृत्तपत्रसंपादनं मया ।
केसरीलेखदायित्वं ममैवातः परं भवेत् ॥ ३४ ॥

विलोक्य केसरीपत्रे भौमे पुण्यपुरीजनाः ।
संपादकपदे नाम तिलकस्य प्रमोदिताः ॥ ३५ ॥

वेदाध्येतृजनश्रेष्ठः प्रणवोच्चारपूर्वकम् ।
आरेभे तिलको भूयः केसरीलेखनोद्यमम् ॥ ३६ ॥

यथोचितं शीर्षकं "वै पुनश्च हरिः ओम्" इति ।
ददौ लेखाय तिलकः प्रथमाय महामतिः ॥ ३७ ॥

स्वाध्याय इव पावित्र्यं वृत्तपत्रप्रकाशने ।
प्रणवोच्चारणेनैवं लोकेभ्यस्तेन दर्शितम् ॥ ३८ ॥

न पूर्त्यै स्वोदरस्यैव वृत्तपत्रसमुद्यमः ।
मातृभूमेर्हि सेवायै व्रतमङ्गीकृतं भवेत् ॥ ३९ ॥

जनसेवामखो दीर्घकालं यः खण्डितोऽभवत् ।
प्रशासनस्य द्रोहेण च्युतस्य न्यायवर्त्मनः ॥ ४० ॥

उपक्रमः पुनस्तस्य ओमित्युच्चारपूर्वकः ।
विहितोऽस्त्येव शास्त्रेषु वेदधर्मानुयायिनाम् ॥ ४१ ॥

मीमांसितं च बालेन मानवानामृणत्रयम् ।
शास्त्रेषूक्तैरपाकार्यं यज्ञस्वाध्यायतर्पणैः ॥ ४२ ॥

लोकर्णं तिलकः प्राह तत्सर्वेभ्योऽतिरिच्यते ।
तस्यैव प्रतिदानस्य कर्तव्यास्ति विचारणा ॥ ४३ ॥

अहं सर्वैरुपकृतः सज्जनैर्देशबान्धवैः ।
सर्वपक्षैः सर्ववर्णैः सर्वधर्मानुयायिभिः ॥ ४४ ॥

ऋणापकरणं शक्यं नाधमर्णेन वै पृथक् ।
प्रशस्यते संघटिता जनसेवा विवेकिभिः ॥ ४५ ॥

भिन्नप्रवृत्तिलोकानां स्वदेशे विद्यते स्थितिः ।
भवन्ति बान्धवाः सर्वे संजाता भारते जनाः ॥ ४६ ॥

सेविता बान्धवा एते भवेयुर्देशसेवया ।
वृक्षमूलेऽम्बुसेकेन पत्रशाखादयो यथा ॥ ४७ ॥

गुरोरस्ते नभःस्थानां ग्रहाणां नोपयुक्तता ।
शुभयोः कार्ययोर्भूम्यां व्रतबन्धविवाहयोः ॥ ४८ ॥

बालस्य लेखराहित्यात् पत्रसृष्टिरमङ्गला ।
सत्कार्यप्रेरणाशून्या विपत्कालेऽतिभीषणे ॥ ४९ ॥

यथाश्वत्थः पादपेषु ज्योतिश्चक्रे यथा रविः ।
केसरी हिन्दपत्रेषु भारतेऽस्मिन् व्यराजत ॥ ५० ॥

संपादनं स्वीकृतं वै तिलकेनेति वार्तया ।
प्रसारस्तस्य पत्रस्याभवद् देशे चतुर्गुणः ॥ ५१ ॥

यथोत्पतत्यन्तराले भूम्यां क्षिप्तश्च कन्दुकः ।
वेगेन केसरीपत्रं प्रवृद्धं भारते तथा ॥ ५२ ॥

हिंदीगुर्जरतैलङ्गवङ्गकर्णाटकेषु वै ।
अनुवादो विचाराणां तिलकस्य प्रकाशितः ॥ ५३ ॥

गृहीत्वा स्वहस्ते पुनः कार्यसूत्रं
जनेभ्योऽकरोद् युक्तमार्गोपदेशम् ।
निराशातमोग्रस्तचेतांसि तेन
स्वदेशादिभक्तिद्रवैः पूरितानि ॥ ५४ ॥

नवाशावसन्तो जनेष्वाविरासीत्
प्रफुल्ला रसालाः पिका गीतहृष्टाः ।
समुत्साहवायुर्ववौ गन्धवाहः
प्रजासु स्वकर्तव्यनिष्ठोदयोऽभूत् ॥ ५५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे पुनश्च हरिः ओम्-आख्यः षड्विंशस्तरङ्गः ।

# सप्तविंशस्तरङ्गः

भारतोत्कर्षचित्तानां भक्तानां हिन्दवासिनाम् ।
द्वेषं कुर्वन्ति पत्राणि लंदनस्थानि नित्यशः ॥ १ ॥

राजश्याला इवोन्मत्ता द्विजिह्वक्रूरमन्यवः ।
खला इव नृपाणां ते प्रासादप्राङ्गणे स्थिताः ॥ २ ॥

सँढर्स्टशासनस्यान्ते नॉर्थकोटो नियोजितः ।
प्रान्ताधीशपदे श्रेष्ठे महाराज्ञीनिदेशतः ॥ ३ ॥

वृत्तपत्रैर्लंदनस्य कृतं तस्याभिनन्दनम् ।
कानिचिद् वर्णयामासुर्मुम्बाराज्यपरिस्थितिम् ॥ ४ ॥

लंदने ग्लोबपत्रेण लेखः कश्चित् प्रकाशितः ।
निन्दिता ब्राह्मणास्तस्मिन् पुण्यपत्तनवासिनः ॥ ५ ॥

उद्गारानवमद् घोरान् लेखे सर्पविषोपमान् ।
संपादकः सुदुर्बुद्धिर्दीर्घद्वेषो निरङ्कुशः ॥ ६ ॥

राजविद्रोहिसंघानां प्रसृतं जालकं महत् ।
तिलकः प्रेरकस्तेषां न तु तेषां प्रवर्तकः ॥ ७ ॥

कर्तव्यो नैव विश्वासो ब्राह्मणेषु कदाचन ।
विप्रराज्यस्थापनार्थमिच्छन्ति ब्राह्मणाः पुनः ॥ ८ ॥

दुष्टानामपकृत्यानां क्रूराणामाततायिनाम् ।
बन्धनात् तिलकस्यैव जातश्चोपशमः खलु ॥ ९ ॥

प्रस्थापिता निग्रहेण शान्तिः शासनकर्तृभिः ।
भारतस्यैकदेशेऽस्मिन् मुम्बईराज्यसंज्ञिते ॥ १० ॥

दण्डेनैव शमं यान्ति राज्येऽसंतोषकारिणः ।
चारैर्निरीक्षितव्यास्ते गुप्तसंचारिभिः सदा ॥ ११ ॥

आङ्ग्लपत्राणि मुख्यानि टाइम्सादीनि भारते ।
साम्राज्यहितदक्षाणि ज्ञातिस्वार्थपराणि च ॥ १२ ॥

संहतिर्भारतीयानां राष्ट्रीयसभया कृता ।
अभवद् दुःसहा तेषामाङ्ग्लराज्याभिमानिनाम् ॥ १३ ॥

पशुदेहव्रणान्वेषी काकस्तच्छिरसि स्थितः ।
दोषैकदृग्भारतस्य तद्वच्चाङ्ग्लजनः सदा ॥ १४ ॥

प्रकाशितो ग्लोबलेखष्टाइम्साभिधदैनिके ।
मुम्बापुर्याः सुविख्याते तिलकद्वेषकारणात् ॥ १५ ॥

अष्टादशदिने नोवेंबरे मासि प्रकाशितः ।
ग्लोबलेख उपर्युक्तष्टाइम्साङ्के समुद्धृतः ॥ १६ ॥

लेखं तं तिलको दृष्ट्वा टाइम्साय स्वशात्रवे ।
चकार निश्चयं दातुमाह्वानं न्यायमन्दिरे ॥ १७ ॥

प्रदत्तं प्रार्थनापत्रं बालेन न्यायमन्दिरे ।
प्रकाशकं च पत्रस्य दर्शयित्वापराधिनम् ॥ १८ ॥

प्रार्थिनस्तिलकस्यासीद् मेथाख्यो विधिविद्वरः ।
अधिवक्ता सुप्रसिद्धो मुम्बईराष्ट्रसेवकः ॥ १९ ॥

सप्तमे मासि तत्पत्रं त्रयोविंशदिनेऽर्पितम् ।
तिलकस्येच्छया दण्डन्यायनिर्णयसद्मनि ॥ २० ॥

व्यसनस्याशुभां वार्तां ग्लोबलेखप्रकाशनात् ।
श्रुत्वोद्भूतस्य टाइम्सः शरणार्थ्यसाभवत् ॥ २१ ॥

आश्रयार्हा भवेद् वृत्तिर्वैतसी समुपस्थिते ।
विघ्ने भीरोरिति प्रोक्तं शास्त्रे तेनोररीकृतम् ॥ २२ ॥

चतुर्विंशदिनस्याङ्के टाइम्सस्य प्रकाशितम् ।
क्षमापत्रं लेखकेन कृतपापप्रणाशनम् ॥ २३ ॥

त्वरा या दर्शिता तेन क्षमापत्रप्रकाशने ।
तयाभिज्ञायते तस्य हृदयं भयकातरम् ॥ २४ ॥

नैव दृष्टो ग्लोबलेखः संपादकमहोदयैः ।
पत्रे प्रकाशनात् पूर्वं दैवदुर्घटनाबलात् ॥ २५ ॥

नैवास्माकं संमतानि ग्लोबव्यक्तमतानि हि ।
मन्यामहे वयं तानि निराधाराणि सर्वथा ॥ २६ ॥

तिलकस्य विषादोऽभूदस्मत्पत्रे प्रकाशनात् ।
क्षन्तव्या च्युतिरस्माकं खिन्नाः स्मश्च भृशं वयम् ॥ २७ ॥

न्यायाधीशसमादिष्टे दिने दीसेंबरेऽष्टमे ।
पक्षद्वयाभिवक्तारौ न्यायालय उपस्थितौ ॥ २८ ॥

टाइम्सस्य प्रतिनिधिः क्षमापत्रं सविस्तरम् ।
समग्रं वाचयामास प्रथमं न्यायमन्दिरे ॥ २९ ॥

न शत्रुरपि हन्तव्यः शरणं यः समागतः ।
युद्धनीतिर्भारतीया तिलकेनावलम्बिता ॥ ३० ॥

उवाच तिलको मेथां कृत्वाऽऽयोगसमर्थनम् ।
स्वीकर्तव्यं क्षमापत्रं टाइम्सेन समर्पितम् ॥ ३१ ॥

अधिवक्ता न्यायमूर्तिं मेथाख्यः समभाषत ।
वाक्यानि शास्त्रसिद्धानि तर्कशुद्धानि बुद्धिमान् ॥ ३२ ॥

तिलकस्य हृदि स्थानं न द्वेषस्य भवेत् कदा ।
प्रमादिनोऽपि लोकस्य न्यायवर्त्मातिगामिनः ॥ ३३ ॥

समुद्धाराय सत्यस्य यत्नं स कुरुते सदा ।
प्रवर्तितोऽयमायोगस्तेन तेनैव हेतुना ॥ ३४ ॥

साक्षिस्थाने स्वयं स्थित्वा सिद्धोऽस्ति प्रतिपक्षिणः ।
प्रश्नानामुत्तरं दातुं तिलको न्यायमन्दिरे ॥ ३५ ॥

न स्वीकृतं तदाह्वानं तिलकप्रतिपक्षिणा ।
तत्संदृश्याब्रवीद् मेथा न्यायमूर्ति विचक्षणः ॥ ३६ ॥

क्षमाप्रदर्शनात् तुष्टस्तिलकः प्रतिवादिनः ।
न पुनस्तेन कर्तव्यः प्रमाद इति सूच्यते ॥ ३७ ॥

स्वीकरोमि क्षमापत्रं प्रदत्तं प्रतिपक्षिणा ।
प्रत्याददे प्रार्थिपत्रं न्यायमूर्तेरनुज्ञया ॥ ३८ ॥

सामञ्जस्यं न्यायकार्ये पक्षाभ्यां यत् प्रदर्शितम् ।
आयोगेऽस्मिन्नहं मन्ये श्लाघ्यं तदुभयोरपि ॥ ३९ ॥

कृत एवं समारोपो न्यायाधीशेन धीमता ।
धन्यवादान् संवितीर्य पक्षयोरुभयोः पुनः ॥ ४० ॥

मृतस्य मारणं नैव साधु पिष्टस्य पेषणम् ।
ताडनं पतितस्यापि मन्यते नीतिविज्जनैः ॥ ४१ ॥

तिलकस्य शिरोधार्या नीतिर्जाता कथं पुनः ।
न्यायालयरणस्थाने टाइम्सेन सहाहवे ॥ ४२ ॥

तिलकद्रोहिणां मुख्यष्टाइम्सो नार्हति क्षमाम् ।
क्षमादानं कुपात्राय पयःपानं त्वहेरिव ॥ ४३ ॥

येषां तिलकभक्तानां शङ्का मनसि चोत्थिता ।
यते तेषामहं कर्तुं समाधानं यथामति ॥ ४४ ॥

नैव दण्ड्या भवेच्छाया नरस्यैवापराधिनः ।
प्रसिद्धिरन्यलेखस्य छायेवास्त्येव वस्तुनः ॥ ४५ ॥

विजापुरेऽतिविख्याते मन्दिरे म्लेच्छनिर्मिते ।
ध्वनेः कृतस्य केनापि भवत्येव प्रतिध्वनिः ॥ ४६ ॥

प्रतिध्वनिक्षमो भागस्तथा पत्रस्य मन्दिरे ।
भिन्नपत्रमतानां च संग्रहायैव रक्षितः ॥ ४७ ॥

न कस्यापि मते दण्ड्यो मन्दिरोत्थप्रतिध्वनिः ।
अत्यश्लीलार्थगर्भोऽपि दुष्टहेतोरसंभवात् ॥ ४८ ॥

निर्विवादमदण्ड्यत्वं छायायाश्च प्रतिध्वनेः ।
प्रतिरूपं तु भिन्नं स्यात् ताभ्यां दोषविनिर्णये ॥ ४९ ॥

कृत्रिमा हेतुमूला सा प्रोक्ता प्रतिकृतिर्बुधैः ।
दण्ड्यैव यदि सा दृष्टा दोषयुक्ता विवेकिभिः ॥ ५० ॥

टाइम्से मुद्रितो लेखः प्रतिध्वनिरिवाभवत् ।
संपादको यदावोचत् प्रमादेन प्रकाशितः ॥ ५१ ॥

न संमतं मतं तस्य मम पत्रस्य सर्वथा ।
प्रमादोऽज्ञानमूलोऽयं खिन्नोऽस्मि क्षम्यतामिति ॥ ५२ ॥

एकेनापि तु शब्देन न कृतं तत्समर्थनम् ।
क्षमायाः स्वीकृतेर्बीजं दौरात्म्यस्यानुपस्थितिः ॥ ५३ ॥

नन्दनोद्यानमाङ्ग्लानां लंदनं श्रीनिकेतनम् ।
अभवद् नगरे तस्मिन् ग्लोबपत्रप्रकाशनम् ॥ ५४ ॥

वर्णयेऽहं कथां रम्यां ग्लोबगर्वापहारिणीम् ।
कालियामर्दनाख्यानतुल्यां धैर्यविवर्धिनीम् ॥ ५५ ॥

आदौ पराभवं नीते भारतद्वारमास्थिते ।
टाइम्से तिलको ग्लोबपराभवमचिन्तयत् ॥ ५६ ॥

प्रेषिता सूचना तस्मै तिलकस्य प्रवादिना ।
दर्शयित्वापराधित्वं पत्रलेखसमुद्भवम् ॥ ५७ ॥

पत्रे प्रकाशितो लेखस्तिलकान्यायकारकः ।
असद्विधानसंपूर्णः सद्विपर्याससंकुलः ॥ ५८ ॥

तत्पातकनिरासाय देहि दण्डं भज क्षमाम् ।
तिलकस्य कृतोऽन्यायो मयेति च प्रकाशय ॥ ५९ ॥

दण्डद्रव्यस्य कर्तव्यः कार्यं तिलकसंमते ।
विनियोग इति स्पष्टं सूचनायां निवेदितम् ॥ ६० ॥

लेखको ग्लोबपत्रस्य तिलकाय मदोद्धतः ।
सामवाक्यं तिरस्कृत्य ददावुन्मत्तमुत्तरम् ॥ ६१ ॥

अस्माकं लिखितं सत्यं न भजामः क्षमां वयम् ।
दण्डं दातुं समर्थाः स्मो न्यायाधीशविनिश्चितम् ॥ ६२ ॥

दुरुक्तैर्दुर्मतिः श्रेष्ठं तिलकं ग्लोबलेखकः ।
कृष्णावतीर्णं श्रीकृष्णं कालियाहिरिवादशत् ॥ ६३ ॥

मतानां तेन लोकानां प्रवाहः कलुषीकृतः ।
लंदने तिलकश्चक्रे तद्विमर्दननिश्चयम् ॥ ६४ ॥

न्यायालये लंदनस्य प्रार्थिपत्रं समर्पितम् ।
तस्य प्रतिनिधीभूतैर्विधिज्ञैश्च यथाविधि ॥ ६५ ॥

ग्लोबमूर्ध्नि पदाघातं कृत्वैवं तिलकस्ततः ।
असत्प्रलापसिद्ध्यर्थं स आह्वयत लेखकम् ॥ ६६ ॥

कर्तव्यं दण्डरूपेण प्रायश्चित्तं च दोषिणा ।
पौण्डानां पञ्चसाहस्री दण्डमानं प्रदर्शितम् ॥ ६७ ॥

ग्लोबो भोगीव संक्रुद्धश्चकार महतीं फटाम् ।
स्थापनीयं गिनिशतं वादिना न्यायमन्दिरे ॥ ६८ ॥

प्रतिवादिव्ययद्रव्यं प्रत्यादानाय तत्क्षणम् ।
पक्षयोरुभयोर्वादे निर्णीते न्यायमूर्तिना ॥ ६९ ॥

नोपक्रमश्च कर्तव्यो न्यायकार्यस्य तद्विना ।
प्रत्युत्तरार्थं दातव्यं मह्यं मासद्वयावधिः ॥ ७० ॥

तत्प्रार्थनानुसारेण न्यायाधीशः समादिशत् ।
निधेयं द्रव्यमादिष्टं प्रार्थिना न्यायमन्दिरे ॥ ७१ ॥

कालापहरणं चिह्नं दौर्बल्यस्यैव निश्चितम् ।
पदं दत्त्वा स्थितो दीर्घं तिलको ग्लोबमस्तके ॥ ७२ ॥

मासद्वये न संप्राप्ताः स्वलेखस्य समर्थकाः ।
ब्रिटिशद्वीपयुग्मे वा साक्षिणो भारतेऽथवा ॥ ७३ ॥

प्रयत्ना विफला जाताः कृता युक्तिप्रयुक्तिभिः ।
लेभे नाश्वासकं ग्लोबलेखको यत्रकुत्रचित् ॥ ७४ ॥

अन्तर्बाह्यं प्रतप्ताङ्गो ग्रस्तो घोरनिराशया ।
मेने स्वतरणोपायं बालं भारतभूषणम् ॥ ७५ ॥

धृत्वा तृणं स्वदंष्ट्रायां साममार्गावलम्बनम् ।
स्वविधिज्ञोपदेशेन कर्तुमैच्छत् स लेखकः ॥ ७६ ॥

ददामि ते व्ययद्रव्यं वादः शाम्यतु चावयोः ।
पत्रकारप्रतिनिधिर्लिलेख तिलकं प्रति ॥ ७७ ॥

विना दण्डं क्षमापत्रप्रसिद्धिं च विना भवेत् ।
आवयोर्न्यायदृष्ट्या न वादस्योपशमः खलु ॥ ७८ ॥

ददे प्रत्युत्तरं शब्दैस्तिलकेन सुनिश्चितैः ।
क्रमेण संमता आसन् ग्लोबस्य तिलकोक्तयः ॥ ७९ ॥

तिलकेन क्षमापत्रलेखनं न स्वयं कृतम् ।
विषयेऽधिकृतस्तस्मिन् सीतारामसुतो हरिः ॥ ८० ॥

तिलकस्य सुहृच्छ्रेष्ठो विधिशास्त्रविशारदः ।
मुम्बापुर्यां सुविख्यातो दीक्षितान्वयदीपकः ॥ ८१ ॥

ददौ प्रतिनिधिस्तस्य लंदनस्थः स्वसंमतिम् ।
क्षमापत्रालेखनस्य चाह ग्लोबस्य लेखकम् ॥ ८२ ॥

अङ्गीकृत्याशयं सर्वमस्मिन् लेखे प्रदर्शितम् ।
प्रदातव्यः क्षमालेखो भवद्भिस्तिलकाय च ॥ ८३ ॥

यथोक्तं च कृतं तेन दण्डो दत्तोऽभिसंमतः ।
प्रकाशितः क्षमालेखो ग्लोबस्य प्रमुखस्थले ॥ ८४ ॥

तिलकेन च विज्ञप्ताः सकलाः पत्रलेखकाः ।
इंग्लंदीयाः सविनयं भूयिष्ठाग्रहपूर्वकम् ॥ ८५ ॥

आदौ ज्ञानं प्रयत्नेन प्राप्तव्यं पत्रलेखकैः ।
चर्चनीया भारतीयप्रश्नास्तैस्तदनन्तरम् ॥ ८६ ॥

प्रतिबध्नन्ति कल्याणमसज्ज्ञानप्रवर्तिताः ।
संलापा विपरीतार्था सद्धेतुप्रेरिता अपि ॥ ८७ ॥

कालियामर्दनं जातं व्रजवासिहितप्रदम् ।
तथैवाभूद् भारतस्य पत्रद्वयविमर्दनम् ॥ ८८ ॥

टाइम्सस्य विमर्दनं च कथितं ग्लोबस्य निर्दालनं
लोकस्याहितकारिणोर्ब्रिटिशयोरुन्मत्तगर्वान्धयोः ।
संजातं तिलकस्य निश्चयधिया गर्वद्रुमोन्मूलनं
ज्ञातं लंदनवासिभिर्बलवतोऽध्यात्मप्रवृत्तेर्बलं ॥ ८९ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे आङ्ग्लपत्रगर्वपरिहाराख्यः सप्तविंशस्तरङ्गः ।

# अष्टाविंशस्तरङ्गः

न सन्मार्गं सुखेनैति न्याय्यवर्त्मातिगो जनः ।
उत्पथस्य भवेद् वृत्तिरम्भसामिव निम्नगा ॥ १ ॥

निबद्धौ बन्धनागारे नातूपाह्वसहोदरौ ।
अपराधं विना रँडहत्याकाण्डादनन्तरम् ॥ २ ॥

शासकैः संशयग्रस्तचेतोभिरिति वर्णितम् ।
पूर्वग्रन्थे ततः पश्चाज्जातं शङ्कानिवारणम् ॥ ३ ॥

सज्जनानां च सर्वेषां न्यायाधीशविनिर्णयात् ।
दामोदराभियोगस्य मुम्बईशासनादृते ॥ ४ ॥

तिलकः केसरीपत्रे दर्शयामास भीषणम् ।
प्रशासकानामन्यायं नातुबन्धनकारिणाम् ॥ ५ ॥

कर्झनस्य मतं जातमनुकूलं विमोचने ।
प्रतिकूलस्तथाप्यासीद् मुम्बईराज्यपालकः ॥ ६ ॥

सँढर्स्टनामधेयोऽभूद् मुम्बईराज्यपालकः ।
मन्त्रानुगः श्वेतकायकार्यकारिसभासदाम् ॥ ७ ॥

संपरीक्ष्य यथान्यायं तच्छासनजनस्थितिम् ।
निर्भयस्तिलकः प्राह न स स्मारकमर्हति ॥ ८ ॥

पूर्वं व्यमोचयद् बन्धू स्वाधिकारनिवर्तनात् ।
दिने प्रान्तपतिर्धूर्तैः कृपणो नातुवंशजौ ॥ ९ ॥

प्रतस्थे तद्दिने राष्ट्रसभाया अधिवेशनम् ।
लखनौपुरमुपस्थातुं बालो राष्ट्रसभानुगः ॥ १० ॥

रमेशचन्द्रदत्तेन विद्वद्वर्येण भूषितम् ।
सभाध्यक्षपदं तस्मिन् भारतीयमहोत्सवे ॥ ११ ॥

निन्दितव्यं सभासद्भिः सँढर्स्टकृतशासनम् ।
प्रस्तावो हेतुनानेन तिलकेन पुरस्कृतः ॥ १२ ॥

विरोधितः सभासद्भिः कैश्चिद् विषयसंसदि ।
गोखलेप्रमुखैर्मुम्बापुरीप्रान्तनिवासिभिः ॥ १३ ॥

सँढर्स्टस्मारकं कार्यमिति कैश्चिद्विनिश्चितम् ।
प्रान्तस्थैः श्रेष्ठिभिर्ज्येष्ठैर्मुम्बय्यां लोकनेतृभिः ॥ १४ ॥

समर्पणं प्रणामानामुद्यतेऽस्तंगताय च ।
अविचार्य गुणांस्तस्य प्रान्तेशाय विगर्हितम् ॥ १५ ॥

नैव संमानमर्हन्ति लोकपीडनकारिणः ।
शासका लोकनेतॄणां यद्यप्युच्चपदस्थिताः ॥ १६ ॥

तत्त्वस्यास्य प्रतिष्ठायै तिलकेन महोद्यमः ।
तं प्रस्तावं पुरस्कृत्य कृतो विषयसंसदि ॥ १७ ॥

अध्यक्षः सूचयामास प्रस्तावस्य विलोपनम् ।
असंभवाद् मतैक्यस्य समितिस्थसभासदाम् ॥ १८ ॥

बालः संपादयामास सौमनस्यं सभासदाम् ।
कृत्वा पालनमाज्ञाया अध्यक्षस्य सभागृहे ॥ १९ ॥

गते समाप्तिं राष्ट्रीयसभाया अधिवेशने ।
तिलको ब्रह्मदेशस्य प्रवासाय मनो दधे ॥ २० ॥

काशिनाथः सुविख्यातश्छत्रेवंशसमुद्भवः ।
निनाय कालिकास्थानं पशुक्रीडाप्रदर्शनम् ॥ २१ ॥

अश्वव्याघ्रगजादीनां दृष्ट्वा क्रीडाश्चतुष्पदाम् ।
बालानां बालिकानां च चापल्यं कुतुकास्पदम् ॥ २२ ॥

पशुशिक्षणविद्यायां प्रावीण्यं विस्मयावहम् ।
छत्रेमहाशयस्यापि संतुष्टा बङ्गबान्धवाः ॥ २३ ॥

नियोजितं ब्रह्मदेशगमनं तदनन्तरम् ।
सह सर्वै रञ्जनाय ब्रह्मदेशनिवासिनाम् ॥ २४ ॥

ब्रह्मदेशालोकनस्य तिलकेच्छां बलीयसीम् ।
ज्ञात्वा छत्रे काशिनाथो ददौ तस्मै निमन्त्रणम् ॥ २५ ॥

जलयानेन गन्तव्यं ब्रह्मदेशं मया सह ।
भवन्तो नोऽनुगृह्णन्तु स्वीकृत्यावाहनं मम ॥ २६ ॥

सत्संगतिर्दृढा नौका पारं कल्मषसागरम् ।
गन्तुं लोकस्य संसारकौटिल्योद्विग्नचेतसः ॥ २७ ॥

दत्तं निमन्त्रणं पत्रे काशिनाथमहाशयैः ।
तिलको वाचयामास सानन्दं स्वीचकार च ॥ २८ ॥

असौ लखनऊनाम्नः पुरात् कालीपुरं ययौ ।
ब्रह्मदेशप्रयाणेच्छुश्छत्रे मित्रं ददर्श च ॥ २९ ॥

तत्र नौकां समारूढः काशिनाथपुरःसरः ।
परीवृतो जनैस्तस्य क्रीडातन्त्रविशारदैः ॥ ३० ॥

मृगाधिपैर्गजैर्व्याघ्रैर्जवनैर्वाजिभिश्च सा ।
व्याप्ता च वानरैर्नौका पशुशब्दनिनादिता ॥ ३१ ॥

ददर्श तिलकस्तत्र तत्प्रशिक्षणपद्धतिम् ।
आज्ञाकरा यथा जाताः पशवः किंकरा इव ॥ ३२ ॥

विजहाति कथं हिंस्रः पशुर्वृत्तिं स्वभावजाम् ।
क्रीडाङ्गणे करोत्याज्ञापालनं स्वामिनः कथम् ॥ ३३ ॥

अभिज्ञातुं रहस्यं तत् कृतं सूक्ष्मावलोकनम् ।
शयनाशनपानानां तिलकेन चतुष्पदाम् ॥ ३४ ॥

शिक्षकाज्ञापालकस्य पशोः पर्याप्तभोजनम् ।
दुर्लभस्त्वन्नलेशोऽपि तन्निदेशातिवर्तिनः ॥ ३५ ॥

वशमानयति क्रूरं सत्त्वं दण्डभयाद् नरः ।
उपोषितः करोत्याज्ञामन्नलाभो यथा भवेत् ।। ३६ ।।

मध्ये तयोः संभवति विश्वासोऽपि प्रयत्नतः ।
मित्रवद् वर्तते हिंस्रः क्रीडामण्डलमध्यगः ।। ३७ ।।

साहसं सततोद्योगः सौजन्यं सावधानता ।
अभावश्च निराशायास्तद्यशःप्रापका गुणाः ।। ३८ ।।

अभ्यासेन भवेत् साध्यमसाध्यमपि कथ्यते ।
आगमोपमगाथायां तुकारामैः सतां वरैः ।। ३९ ।।

प्रत्यक्षतां गतं तत्त्वं तिलकस्य निरीक्षणात् ।
पशुशिक्षाप्रयोगाणां नौकायाने निरन्तरम् ।। ४० ।।

वङ्गोदधेरिरावत्या मुखमाविश्य सुन्दरम् ।
प्रगता जलनौका सा रंगूनं पत्तनोत्तमम् ।। ४१ ।।

तत्पूर्वमेव संप्राप्ता वार्ता रंगूनवासिभिः ।
आयास्यति ब्रह्मदेशं बालो भारतकेसरी ।। ४२ ।।

समायाताः स्वागताय प्रमुखा बुद्धभिक्षवः ।
श्रेष्ठिनो भारतीयाश्च रंगूननगरस्थिताः ।। ४३ ।।

सत्कारायागतैर्लोकैस्तिलकश्चाभिवन्दितः ।
उच्चैर्जयजयोद्घोषैः पूरितं तैर्नभोऽखिलम् ।। ४४ ।।

छत्रैसमन्वितो बालो जलयानादवातरत् ।
पुष्पमालां ददुस्तस्मै सज्जनाः समुपस्थिताः ।। ४५ ।।

तिलकः काशिनाथेन सहोवास प्रसन्नधीः ।
क्रीडाजननिवासाय तेन संपादिते गृहे ।। ४६ ।।

अधिवासो ब्रह्मदेशे सप्ताहत्रितयावधिः ।
अपश्यद् दर्शनीयानि रंगूने मन्दिराणि सः ।। ४७ ।।

शिखरैः हेमवद्भिश्च शोभितानि मनोहरैः ।
तथा ध्वजैः संकुलानि बुद्धदेवस्य मूर्तिभिः ॥ ४८ ॥

सुत्तपाठस्य घोषेण भिक्षुभिर्नादितानि च ।
दीपरम्याणि पद्मैश्च पूरितानि सुगन्धिभिः ॥ ४९ ॥

स्थितिर्निरीक्षिता तेन धार्मिकी नैतिकी तथा ।
आङ्ग्लविद्याभूषितानां बौद्धानां च विशेषतः ॥ ५० ॥

भिक्षूणां च प्रभावस्य धर्मसंरक्षणोद्यमे ।
अनर्थेभ्यः प्रचारेण जातेभ्यः खिस्तधर्मिणाम् ॥ ५१ ॥

व्यवस्था शिशुशिक्षायाः कृतासीद् बुद्धभिक्षुभिः ।
मध्यमोत्तमशिक्षायै विद्यालयविनिर्मितिः ॥ ५२ ॥

प्रशासनोत्तेजनेन खिस्तधर्मप्रचारकैः ।
निपुणैर्जनशिक्षायां यूरोपादागतैः कृता ॥ ५३ ॥

जगाम तिलकस्तत्र द्रष्टुं धार्मिकनाटकम् ।
ज्ञातुं सोऽभिरुचिं नाट्यकलायां ब्रह्मदेशिनाम् ॥ ५४ ॥

प्राप्नुवन्नल्पमूल्येन जनास्तत्र क्षुधातुराः ।
पक्वतण्डुलसंपूर्णा नलिका वंशनिर्मिताः ॥ ५५ ॥

पण्यस्थानेऽथ वाणिज्ये यन्त्रसंचालितोद्यमे ।
विलोकितं न श्रेष्ठत्वं ब्रह्मदेशनिवासिनाम् ॥ ५६ ॥

बहुसंख्यजना आसन् कृषिकर्मोपजीविनः ।
वाणिज्येनैव जीवन्ति हिन्दचीनाङ्ग्लवासिनः ॥ ५७ ॥

शासनैक्येन नोत्पन्नं सौहार्दं ब्रह्महिन्दयोः ।
निसर्गेण कृताद् भेदाद् विचाराचारयोस्तथा ॥ ५८ ॥

ब्रह्मदेशस्य विख्याता मंडालेसंज्ञिका पुरी ।
ब्रह्मिणां सा प्रियतमा राजधानी पुरातनी ॥ ५९ ॥

जगाम तिलको द्रष्टुं पुरीं तां गतवैभवाम् ।
आसीद् यत्र नृपावासो गतप्राणतनूपमः ॥ ६० ॥

स्तम्बेरमा अराजन्त श्वेता यत्र मदोत्कटाः ।
कुर्वन्ति रासभास्तत्र निर्भयाः कर्कशस्वरम् ॥ ६१ ॥

उपेक्षितानि जीर्णानि मन्दिराणि समन्ततः ।
बुद्धस्य कृतनीडानि काकोलूकादिभिः खगैः ॥ ६२ ॥

दृष्ट्वा पुरीं विलुप्ताभां बालो मेनेऽतिदुःखितः ।
अतर्क्यैव मनुष्याणां वक्रा कालगतिः सदा ॥ ६३ ॥

मण्डाले वै ब्रह्मदेशे महाराष्ट्रे पुणेपुरी ।
करुणास्पदतां प्राप्नोद् विधवाभागिनी यथा ॥ ६४ ॥

निवासस्तिलकस्यासीद् नगरं तत्समीक्षितुम् ।
दिनमेकं ततो यातो रंगूनं तिलकस्तदा ॥ ६५ ॥

पुनरागमनं वै स्यात् तदा तन्नगरं प्रति ।
चिन्तितं हृदये नैव तिलकेन कथंचन ॥ ६६ ॥

अष्टाब्दानन्तरं तस्मात् षड् वर्षाणि समानयत् ।
तिलकं बन्धनागारे तत्रस्थे तु बलाद् विधिः ॥ ६७ ॥

महाराष्ट्रं जिगमिषुः कलकत्तां पुरीं ययौ ।
कंचित् कालं स्थितस्तत्र घोषबन्धुदिदृक्षया ॥ ६८ ॥

मुम्बापुरीं संप्रतस्थे गन्तुमग्निरथेन सः ।
उवासैकदिनं मार्गे जबलपुर्यां महामनाः ॥ ६९ ॥

बालमित्रं समालिङ्ग्य वृद्धं सानेऽभिधं गृहे ।
स्वीकृत्य च तदातिथ्यं चक्रे संचारवर्णनम् ॥ ७० ॥

प्रत्यागतो जन्मभूमिं सुहृद्भिश्चानुयायिभिः ।
सहर्षं स्थानकायातैः समारोहेण सत्कृतः ॥ ७१ ॥

समचरत पृथिव्यां योऽधिगन्तुं जनानां
रविरिव निरपेक्षः सुस्थितिं दुःस्थितिं च ।
वितरति निजतेजः सुप्तबोधाय शश्वत्
तिलककुलललामं लोकमित्रं नमामि ॥ ७२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे ब्रह्मदेशदर्शनाख्योऽष्टाविंशस्तरङ्गः ।

## एकोनत्रिंशस्तरङ्गः

तिलकस्य सुहृद् बाबामहाराज उदारधीः ।
चिन्ताग्रस्तोऽनपत्यत्वाद् दुर्धरव्याधिपीडितः ॥ १ ॥

खिस्तवर्षे सप्तनवत्यष्टादशशतोत्तरे ।
दिनाङ्के सप्तमे मासस्याष्टमस्य दिवं गतः ॥ २ ॥

स्वसंपत्तिव्यवस्थायै देहपातादनन्तरम् ।
मृत्युपत्रं कृतं तेन तत्र पंचा नियोजिताः ॥ ३ ॥

कुंभोजकर एकश्च नागपूरकराभिधः ।
द्वितीयश्च महाराजभृत्यो यः पोषितश्चिरम् ॥ ४ ॥

दादानामा तृतीयश्च खापर्डेकुलदीपकः ।
मित्रोत्तमश्चतुर्थोऽभूद् बालो गङ्गाधरात्मजः ॥ ५ ॥

अन्तर्वत्नी महाराजपत्नी पुत्रमजीजनत् ।
गतो मृत्युवशं सोऽपि यावन्नान्तो द्विमासयोः ॥ ६ ॥

स्थितिं विलोकयामास विश्वस्तस्तिलको यदा ।
महाराजस्यार्थिकीं वै सचिन्तं तन्मनोऽभवत् ॥ ७ ॥

पीडितात्यर्णभारेण भृत्यैः प्राय उपेक्षिता ।
संपत्तिः पूर्वजप्राप्ता शोचनीयदशां गता ॥ ८ ॥

यथा चन्द्रः कृष्णपक्षे गच्छत्यनुदिनं क्षयम् ।
विनाशाभिमुखी नित्यमृणग्रस्तस्थितिस्तथा ॥ ९ ॥

दत्तद्रव्यस्योत्तमर्णाः प्रत्यादानाय संहताः ।
महान्तं चक्रुराक्रोशं स्वामिमृत्योरनन्तरम् ॥ १० ॥

वृक्षारूढा यथा काका विलोक्याधः पशुं मृतम् ।
पुरयन्ति दिशः सर्वास्तन्मांसमभिलिप्सवः ॥ ११ ॥

आश्वासितास्ते बालेन प्रतिदानं भवेदिति ।
यथाकालं महाराजकृतर्णस्याखिलस्य वै ॥ १२ ॥

प्रापुः सर्वे समाधानं धनिकाः पुण्यवासिनः ।
तिलकोऽचिन्तयद् मार्गमृणमुक्तेः सुनिश्चितम् ॥ १३ ॥

न्यूनीकारो व्ययस्यैकं धनरक्षणसाधनम् ।
अन्यत् संग्रहणं सम्यक् कृषिप्राप्यधनस्य च ॥ १४ ॥

शश्वन्निरीक्षणं द्रव्यव्ययस्य गृहकर्मसु ।
अवश्यं मेनिरे सर्वे विश्वस्तास्तिलकादयः ॥ १५ ॥

महाराजस्य पत्नी या लोके ताई इति श्रुता ।
बुद्धिभेदः कृतस्तस्या नागपूरकरादिभिः ॥ १६ ॥

साधु मेने न तत् सर्वं स्वाधिकारनियन्त्रणम् ।
विनियोगे स्वसंपत्तेर्व्यवस्थायां गृहस्य च ॥ १७ ॥

मृते पुत्रेऽधिकारोऽपि विश्वस्तानां लयं गतः ।
एवं प्रवर्तितं चक्रं दुर्जनैर्बुद्धिभेदिभिः ॥ १८ ॥

चाञ्चल्यं मनसस्तस्यास्तिलकेन विलोकितम् ।
निमन्त्रिता विचाराय विश्वस्तानां सभा तदा ॥ १९ ॥

विश्वस्ता मिलिताः सर्वे विचारार्थं हितैषिणः ।
आसीदुपस्थिता ताई सभास्थाने निमन्त्रणात् ॥ २० ॥

दिनाङ्केऽष्टादशतमे जूनमासस्य निर्णयम् ।
निम्नप्रोक्तं मतैक्येन चक्रुः सर्वे सभासदः ॥ २१ ॥

गच्छतामविलम्बेन खापर्डेतिलकावुभौ ।
अवरंगपुरीं ताईतृतीयौ कार्यसिद्धये ॥ २२ ॥

गृहीत्वा बालकं योग्यं कुर्याच्छास्त्रविधानतः ।
ताई दत्तविधिं तस्य स्वग्रामं परापतेत् ॥ २३ ॥

निर्णयाय प्रदत्तासीद् महाराज्ञ्या स्वसंमतिः ।
अवरंगपुरीं गन्तुमन्येद्युस्ते प्रतस्थिरे ॥ २४ ॥

नियोजितं गुरुद्वारस्थलं तत्रत्यसज्जनैः ।
अतिथीनां निवासाय पुण्यग्रामनिवासिनाम् ॥ २५ ॥

अनेका आययुर्बाला दर्शनीयाः सपालकाः ।
आदृत्य सूचनां दत्तां तिलकेन यथोचिताम् ॥ २६ ॥

कैलासमन्दिरं द्रष्टुं गता ताई ससेवका ।
निरीक्षणाय बालानां यथाकालं समागतः ॥ २७ ॥

जगन्नाथाभिधो बालः सर्वेषां संमतोऽभवत् ।
पुत्रत्वेन स्वीचकार ताई तं विधिवत् तदा ॥ २८ ॥

संचालितो धर्मविधिर्जूनमासे दिनद्वयम् ।
दत्तकग्रहणार्थं वै ब्राह्मणैर्गृह्यकोविदैः ॥ २९ ॥

जूनमासस्य चोपान्त्ये दिनाङ्के तिलको गतः ।
पुणेपुरीं स्थितप्रज्ञस्ताईपुत्रसमन्वितः ॥ ३० ॥

संदेशं करवीरस्थं प्रेषयामास वैद्युतम् ।
नागपूरकरो राजगुरुवंशजनं प्रति ॥ ३१ ॥

खापर्डेतिलकाभ्यां वै सह ताई गताधुना ।
अन्विष्य बालकं कर्तुं विधानं दत्तकस्य च ॥ ३२ ॥

कुटिलं कर्म विज्ञाय तद्विश्वस्तविरोधकम् ।
नागपूरकरस्यैवं तिलकः स्वसहायकान् ॥ ३३ ॥

गत्वा च कथयामास दण्ड्योऽयं कुटिलो जनः ।
नैव क्षमार्ह इत्याह निजविश्वस्तबान्धवान् ॥ ३४ ॥

आष्टनायाल्पकालेन तिलकस्त्वधिकारिणे ।
न्यवेदयद् दत्तकस्य वृत्तं सर्वं गृहागतः ॥ ३५ ॥

तथा निवेदितं वृत्तं दत्तकस्य यथाविधि ।
संपादितस्य बालेन करवीरस्य भूपतेः ॥ ३६ ॥

कुटिलैर्बोधिता शश्वदल्पप्रज्ञाविवेकिनी ।
मनोव्यथां श्रावयितुं गताष्टननिवेशनम् ॥ ३७ ॥

श्रुत्वा निवेदनं तस्या मनसा दुःखितोऽभवत् ।
न जानाति जनः कश्चिदुक्तं संवदतोस्तयोः ॥ ३८ ॥

तदूर्ध्वं यत्नमारेभे ताई राजगुरोः कुलात् ।
ग्रहीतुं बालकं शीघ्रं करवीरनिवासिनः ॥ ३९ ॥

समानीताः पुण्यपुरीं करवीरात् त्रयो जनाः ।
बाळाख्यः पण्डिताख्यश्च वृद्धा च जननी तयोः ॥ ४० ॥

न्यवसंस्ते त्रयः साठेनाम्नो मित्रस्य सद्मनि ।
गुप्तं दत्तविधानं ते कर्तुं चक्रुश्च निश्चयम् ॥ ४१ ॥

त्रयोदशदिने रात्रौ जुलैमासे समुत्सुकाः ।
कर्वीरादागताः सर्वे मिलितास्ताइसद्मनि ॥ ४२ ॥

स्थापनीयः सुतस्थाने बालः कोल्हापुरागतः ।
ताईदेव्या विधानेन दत्तकस्येति हेतुना ॥ ४३ ॥

एतां सर्वां च विज्ञाय कुटिलां गुप्तयोजनाम् ।
सहसोपस्थितस्तेषां पुरतस्तिलकः सुधीः ॥ ४४ ॥

संमुखं तिलकं दृष्ट्वा सर्वथैवानपेक्षितम् ।
भयभीता बभूवुस्ते ताईप्रभृतयो जनाः ॥ ४५ ॥

तिलकः कथयामास दुराराध्यां मनस्विनीम् ।
त्वया प्रतीक्षा कर्तव्या विश्वस्तागमनस्य च ॥ ४६ ॥

नाद्य दत्तविधिः कार्यस्तेषामत्रानुपस्थितौ ।
कुंभोजकरमाहूय कुरु यत् कर्तुमिच्छसि ॥ ४७ ॥

स्वीकृत्य तिलकस्योक्तिं ताई कार्याद् न्यवर्तत ।
संकल्पितात् दत्तकस्य रात्रौ भग्नमनोरथा ॥ ४८ ॥

दिने पञ्चदशे चैव खापर्डेवंशभूषणः ।
गणेशाख्यः समायातस्तिलकस्य निमन्त्रणात् ॥ ४९ ॥

कर्तुं तस्या निश्चयस्य येताते परिवर्तनम् ।
अविचारविमूढाया खापर्डेतिलकावुभौ ॥ ५० ॥

स यत्नो विफलो जातः खपुष्पाप्तेर्यथा श्रमः ।
सिकतातैललाभाय यथा निष्पीडनोद्यमः ॥ ५१ ॥

विलोपयति सद्बुद्धिं दुराग्रहपिशाचिका ।
उपाजगाम वैधव्यं कैकेयी बाधिता तया ॥ ५२ ॥

धृतराष्ट्रश्च तद्ग्रस्तो विदुरस्य महात्मनः ।
उपदेशं तिरश्चक्रे वंशनाशं ददर्श च ॥ ५३ ॥

विज्ञाय निश्चयं तस्या विश्वस्ता मेनिरे तदा ।
न युक्तः संनिवासोऽत्र कोल्हापुरनिवासिनाम् ॥ ५४ ॥

पूर्वं सूर्योदयादेव सर्वैस्तैः सद्मनो बहिः ।
गन्तव्यमेव विश्वस्ताः समादेशं ददुस्त्रयः ॥ ५५ ॥

यदि त्यजेयुर्न स्थानं स्वेच्छयातिथयस्तदा ।
सर्वोपायान् वयं कुर्मस्तेषां निःसारणाय वै ॥ ५६ ॥

क्रोधाविष्टावदत् ताई प्राप्ता आप्ता गृहे मम ।
अपमानं ममाप्तानां न यूयं कर्तुमर्हथ ॥ ५७ ॥

आतिथ्यार्हा जना नेह ये विश्वस्तविरोधिनः ।
नियोजिता व्यवस्थायै गृहादीनां यतो वयम् ॥ ५८ ॥

विश्वस्तानां समाकर्ण्य वचनं निश्चयात्मकम् ।
अञ्जसा निर्ययुः सर्वे कोल्हापुरनिवासिनः ॥ ५९ ॥

निर्यातेषु समस्तेषु द्वारपालं समादिशन् ।
अत्रोपविश विश्वस्ताः प्रासादं रक्षितुं सदा ॥ ६० ॥

कपाटपिहितद्वारं गवाक्षद्वारनिर्गमम् ।
प्रतिषिद्धप्रवेशं च विश्वस्तानुज्ञया विना ॥ ६१ ॥

स्वतन्त्रा स्वामिनी ज्ञेया प्रवेशे निर्गमे तथा ।
निर्भयः सन् सावधानो रक्ष नित्यमिदं गृहम् ॥ ६२ ॥

पण्डितः करवीरस्थो गत्वा रक्षाधिकारिणम् ।
उवाच तिलकेनास्ति गृहे ताई नियन्त्रिता ॥ ६३ ॥

निर्यातुं सासमर्थास्ति प्रवेष्टुं वा गृहं पुनः ।
नष्टा स्वतन्त्रता तस्या विश्वस्तानां दुराग्रहात् ॥ ६४ ॥

उपायस्त्वविलम्बेन कर्तव्यो भवताधुना ।
एवं संप्रार्थितास्तेन दक्षा रक्षाधिकारिणः ॥ ६५ ॥

गत्वा गृहं चाष्टनस्य कथयामास पण्डितः ।
तिलकः सर्वदुःखस्य हेतुर्मुख्य इति प्रभो ॥ ६६ ॥

जिल्हान्यायपतेस्तस्य समादेशानुसारतः ।
यातास्ताईगृहं द्रष्टुं रक्षायोगाधिकारिणः ॥ ६७ ॥

अभावे प्रतिबन्धस्य प्रवेशे निर्गमेऽथवा ।
स्वामिन्या मेनिरे व्यर्थमाक्रोशमधिकारिणः ॥ ६८ ॥

अन्येषां हि प्रवेशाय किं निर्बन्धस्य कारणम् ।
तत्क्षणं तिलकः प्राह गृहं दुर्गोऽस्ति मामकः ॥ ६९ ॥

अनन्तरं गता ताई द्रष्टुं च स्वयमष्टनम् ।
प्रोत्साहिता तदर्थं सा नागपूरकरादिभिः ॥ ७० ॥

अधिकारविनाशाय विश्वस्तानां मनो दधे ।
प्रोबेटस्य निरासाय ताई न्यायालयं गता ॥ ७१ ॥

सा शीघ्रं निश्चयं चक्रे कर्वीरगमनं प्रति ।
दत्तकस्य विधानाय भूपाज्ञाया अवाप्तये ॥ ७२ ॥

करवीरस्थभूपालं तिलकोऽपि गतः स्वयम् ।
पूर्वदत्तविधानस्य वृत्तं तस्मै न्यवेदयत् ॥ ७३ ॥

संमतिर्नैव दातव्या यतोऽवैधैव सा भवेत् ।
विधवायै पुनर्दत्तपुत्रावाप्तिर्निरर्थका ॥ ७४ ॥

तिलकस्य वचो जातं केवलं जलताडनम् ।
विधवा सा विनायासमवाप्नोद् भूपसंमतिम् ॥ ७५ ॥

प्रत्यगृह्णात् सुतत्वेन करवीरनिवासिनम् ।
बाळं ताई यथाशास्त्रं नृपतौ समुपस्थिते ॥ ७६ ॥

अष्टादशदिने विप्रैरागस्टस्य महोत्सवः ।
संपादितो दत्तकस्य संस्थानिकपुरस्कृतः ॥ ७७ ॥

अवैधत्वस्य सिद्ध्यर्थं द्वितीयस्य विधानतः ।
ग्रहणस्य सुतत्वेन प्रथमे सति जीवति ॥ ७८ ॥

अयच्छद् वै प्रार्थिपत्रं तिलको न्यायमन्दिरे ।
सन्मित्रस्यान्तकालेच्छापूर्त्यै सत्यव्रतस्थितः ॥ ७९ ॥

व्यतीयुस्तिलकस्यास्मिन्नभियोगस्य चालने ।
द्वादशाधिकवर्षाणि संकुलानि विपत्तिभिः ॥ ८० ॥

प्रोबेटाभिसमीक्षायां तिलकः साक्षिपञ्जरे ।
चतुर्दशाहपर्यन्तमष्टनस्याग्रतः स्थितः ॥ ८१ ॥

पप्रच्छाप्रस्तुतान् प्रश्नांस्तिलकद्वेषचोदितः ।
प्रोबेटमकरोद् व्यर्थं न्यायतत्त्वातिगोऽष्टनः ॥ ८२ ॥

अदूषयच्च चारित्र्यं तिलकस्य महात्मनः ।
अष्टनो भारतद्वेष्टा मिथ्याऽऽरोपैः स्वनिर्णये ॥ ८३ ॥

निर्दिष्टा मुख्यतो दोषास्त्रयस्तेन स्वनिर्णये ।
विगर्हितन्यायशास्त्रविकारवशबुद्धिना ॥ ८४ ॥

सत्यं वक्तुं प्रतिज्ञातोऽप्यसत्यं तिलकोऽवदत् ।
न्यायालयेऽपराधोऽयं तिलकेन कृतो महान् ॥ ८५ ॥

असत्यं कारयामास लेखं बुद्धिपुरःसरम् ।
उपयोगः कृतस्तस्य स्वपक्षस्य समर्थने ॥ ८६ ॥

अन्वेषणाय दोषाणां यथाशास्त्रं समादिशत् ।
दण्डन्यायालयाधीशमष्टनो नगरस्थितम् ॥ ८७ ॥

बालमाज्ञापयास प्रदातुं प्रतिभूद्वयम् ।
पञ्चदश सहस्राणि तन्मूल्यं चात्मलेखनम् ॥ ८८ ॥

उपस्थित्यै दिने न्यायमन्दिरे तेन दर्शिते ।
दोषान्वेषणकार्यार्थं दण्डन्यायाधिकारिणा ॥ ८९ ॥

कृतं सर्वं यथादिष्टं तिलकेन विवेकिना ।
बलवन्तं विधिं मत्वा कालज्ञेन दुरासदम् ॥ ९० ॥

जाले प्रसारिते दृष्ट्वा धीवरस्तद्गतं यथा ।
मीनं तुष्टः क्षणे तस्मिन् दुष्टधीरष्टनस्तथा ॥ ९१ ॥

यशस्तु तिलकः प्राप श्रेष्ठन्यायासनालयात् ।
विश्वस्ताः स्वाधिकारेषु यथापूर्वं प्रतिष्ठिताः ॥ ९२ ॥

अवैधाऽऽज्ञा प्रदत्ता या प्रोबेटव्यर्थकारिणी ।
अष्टनेनेति सुस्पष्टं मतं न्यायाधिकारिणः ॥ ९३ ॥

प्रशासनेन मुम्बय्या ब्रुइनश्चतुराग्रणीः ।
अन्वेषणाय दोषाणां तिलकस्य नियोजितः ॥ ९४ ॥

सूक्ष्ममन्वेषणं कृत्वा ब्रुइनः स्वमतं ददौ ।
अप्रमाणा निराधारा दोषा अष्टनदर्शिताः ॥ ९५ ॥

उपेक्ष्य तन्मतं प्रान्तपतिः क्लेमंटमादिशत् ।
कर्तव्यः साक्षिणः श्रुत्वा त्वया दोषविनिर्णयः ॥ ९६ ॥

तद्वर्षे दशमे मासे प्रारम्भो न्यायमन्दिरे ।
तिलकस्याभियोगस्य जातः क्लेमंटभूषिते ॥ ९७ ॥

साक्षिणां च परीक्षार्थं दशमासावधिर्गतः ।
आसंस्तेषु निजामस्य केचिद् देशनिवासिनः ॥ ९८ ॥

न क्लेमंटः समर्थोऽभूदानेतुं न्यायमन्दिरम् ।
केनापि तानुपायेन पुण्यग्रामप्रतिष्ठितम् ॥ ९९ ॥

प्रवादी तिलकस्यासीत् करंदीकरवंशजः ।
दादाख्यो विधिशास्त्रज्ञः क्लेमंटन्यायमन्दिरे ॥ १०० ॥

न्यायदानदयाशून्यः क्लेमंटो निर्णयं ददौ ।
आसीद् बालो मृषावादी तथा न्यायनिरोधकः ॥ १०१ ॥

सार्धवर्षं तन्निवासः सश्रमो बन्धनालये ।
द्रव्यदण्डश्च रूप्याणां सहस्रमिति सोऽब्रवीत् ॥ १०२ ॥

समुद्घोषाद् निर्णयस्य तिलकं बन्धनालयम् ।
न्यायाधीशाज्ञया निन्युरविलम्बेन रक्षकाः ॥ १०३ ॥

अर्पयित्वाक्षेपपत्रं उच्चन्यायालये तदा ।
प्रार्थितो बन्धमोक्षस्तु तिलकस्य प्रवादिना ॥ १०४ ॥

स्वीकृत्याक्षेपपत्रं तद् न्यायाधीशोऽन्वमोदत ।
आज्ञापयद् बन्धनाच्च तिलकस्य विमोचनम् ॥ १०५ ॥

सेशनन्यायकार्यस्य ल्यूकसोऽधिपतिस्तदा ।
दशमे द्वादशे चैव मासयोरशृणोद् द्वयोः ॥ १०६ ॥

कृतं तदाधिवक्तृभ्यां पक्षयोरुभयोरपि ।
न्यायमूर्तेर्निर्णयस्य खण्डनं मण्डनं तथा ॥ १०७ ॥

दिने चतुर्थे मासस्य प्रथमस्यैशवे शके ।
ल्यूकसो निर्णिनायासौ वेदखग्रहभूमिते ॥ १०८ ॥

सिद्धोऽसद्भाषणारोप इति तस्य विनिर्णयः ।
असिद्धोऽन्यायनिर्बन्ध इति न्यायपतेर्मतम् ॥ १०९ ॥

तदर्थं निवसेद् बालः षण्मासं बन्धनालये ।
नीतोऽसौ बन्धनागारं हस्तशृङ्खलपीडितः ॥ ११० ॥

अष्टमेऽहनि तन्मासे श्रेष्ठन्यायालयाज्ञया ।
तिलको बन्धनाद् मुक्तः सूर्योऽभ्रपटलादिव ॥ १११ ॥

आसनस्थौ शुश्रुवतुर्न्यायमूर्ती दिनत्रयम् ।
मासस्यान्ते द्वितीयस्य जेंकिन्स्बेटीतिसंज्ञितौ ॥ ११२ ॥

आक्षेपपत्रिकाप्रश्नचर्चामुभयपक्षयोः ।
कृतां पक्षाधिवक्तृभ्यां मर्मज्ञौ शान्तसन्मती ॥ ११३ ॥

तृतीयेऽहनि मार्चस्य दर्शयामासतुर्मतम् ।
निर्दोषस्तिलकोऽस्तीति सप्रमाणं स्वनिर्णये ॥ ११४ ॥

तिलकस्य सुहृद् दाजी खरेवंश्योऽतिबुद्धिमान् ।
अपायात् तं मोचयितुं यत्नस्तेन कृतो महान् ॥ ११५ ॥

श्रुत्वा तां मङ्गलां वार्तां मुम्बापुर्यां प्रमोदिताः ।
वितेरुः शर्करां सर्वे जयघोषमुखा जनाः ॥ ११६ ॥

विद्युद्यन्त्रस्य संदेशैः प्रसृता भारतेऽखिले ।
यशसो मङ्गला वार्ता बालस्याल्पावधौ शुभा ॥ ११७ ॥

विद्युत्संदेशपत्राणामासीद् वृष्टिरखण्डिता ।
पर्जन्यस्येव वर्षासु श्रावणे त्रिदिनात्मिका ॥ ११८ ॥

महामन्दाश्रुपूरेण प्लाविता लोकहृन्मही ।
प्राप्तैकरूपता सर्वा लुप्तनिम्नोन्नतप्रथा ॥ ११९ ॥

जयघोषनिनादेन पूरितं पूर्णमम्बरम् ।
भारतीयप्रदेशानामाकुमारीहिमालयम् ॥ १२० ॥

गौरवार्थं सभा जाताः सहस्रं वै सहस्रशः ।
संस्थानिकप्रदेशे च भारते ब्रिटिशाङ्किते ॥ १२१ ॥

प्रमोदो वर्णनातीतः पुण्यपत्तनवासिनाम् ।
उद्वेलतादृशां मन्ये गतस्तन्मोदसागरः ॥ १२२ ॥

अण्णासाहेबनामासौ पटवर्धनवंशजः ।
अध्यक्षः पुण्यपौराणां सभायाः सर्ववन्दितः ॥ १२३ ॥

रेमार्केटस्थले भव्ये संहता अयुतं जनाः ।
नेतारं तिलकं द्रष्टुं वन्दितुं तत्पदाम्बुजे ॥ १२४ ॥

तिलकस्य विजेतुस्ते चक्रुः सर्वेऽभिनन्दनम् ।
धन्यवादान् ददुर्न्यायमूर्त्योः सत्याभिमानिनोः ॥ १२५ ॥

शशंसुरधिवक्तारौ करंदीकरखरेऽभिधौ ।
दण्डन्यायप्रक्रियासु निपुणौ वै सुहृत्तमौ ॥ १२६ ॥

ताई मृताल्पकालेन क्रेमंटस्य विनिर्णयात् ।
तिलकापत्तिवृक्षस्य बीजारोपणकारिणी ॥ १२७ ॥

तिलकस्य ज्येष्ठपुत्रो विश्वनाथो दिवं गतः ।
ग्रन्थिज्वराभिघातेन कालेऽस्मिन् सङ्कटाकुले ॥ १२८ ॥

क्षुब्धसिन्धुतरङ्गेषु दीपस्तम्भ इव स्थिरः ।
निर्भयस्तिलकस्तस्थौ विघ्नेषूपस्थितेष्वपि ॥ १२९ ॥

कलेमंटाष्टनराहुकेतुदितिजान्यायेन हीनप्रभः
कीर्त्यर्कस्तिलकस्य कर्मनिरतस्यासक्तिशून्यस्य च ।
न्यायोपासकसत्त्वमूर्तियुगलन्यायोक्तमन्त्रोक्तिभि-
रायातो जनदृक्पथं द्विगुणितप्रोद्दीप्ततेजोंऽशुभिः ॥ १३० ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे अग्निदिव्यपरीक्षा नाम एकोनत्रिंशस्तरङ्गः ।

## त्रिंशस्तरङ्गः

इंग्लंदे शतके विंशे प्रारब्धे भाग्यशालिनी ।
व्हिक्टोरिया महाराज्ञी जनवन्द्या दिवंगता ॥ १ ॥

शशंस तिलको राज्ञीं सत्त्वशीलां विवेकिनीम् ।
वत्सलां परमोदारां मन्त्रितन्त्रानुवर्तिनीम् ॥ २ ॥

आद्यस्वातन्त्र्ययुद्धान्ते सम्राज्ञीपदधारिणी ।
तोषाय भारतीयानां चक्रे सा तत्त्वघोषणाम् ॥ ३ ॥

महासभासमारोहस्तदाधारेण नेतृभिः ।
संचालितो बुद्धिमद्भिर्नवरोजीपुरस्सरैः ॥ ४ ॥

निर्याणसमये तस्या व्हाइस्रायपदस्थितः ।
कर्झनो भारते मुख्य आङ्ग्लसाम्राज्यवादिनाम् ॥ ५ ॥

दिनाङ्के षोडशे राज्ञीमृत्युमासेऽत्यमङ्गले ।
प्रज्ञादीपो भारतस्य निर्वाणं प्राप माधवः ॥ ६ ॥

रानडे इति विख्यातो न्यायमूर्तिपदस्थितः ।
गभीरश्चार्थशास्त्रज्ञः स्वदेशहितचिन्तकः ॥ ७ ॥

तिलको दर्शयामास " सर्वज्ञः स हि माधवः " ।
इति शब्दैर्माधवस्य विद्यारण्येन तुल्यताम् ॥ ८ ॥

महाराष्ट्रस्य मृत्पिण्डो देशभक्त्युष्मणा कृतः ।
राजनीतिप्रवीणेन माधवेन सचेतनः ॥ ९ ॥

मृत्युलेखे माधवस्य तिलकेन प्रदर्शितः ।
प्रगाढ आदरस्तस्मिन् यथार्थः सर्वथोचितः ॥ १० ॥

मार्गस्य माधवोक्तस्य विरोधी तिलको यदि ।
विधानं मृत्युलेखोक्तं नासीदेवौपचारिकम् ॥ ११ ॥

महासभाविनिर्मित्या राजनीतेर्विशालता ।
दर्शिता या माधवेन बीजं बालादरस्य तत् ॥ १२ ॥

आफ्रिकाख्ये बृहत्खण्डे यूरोपादागता जनाः ।
निवासाय स्वलोकानां यत्नं चक्रुः पृथक् पृथक् ॥ १३ ॥

प्रस्थापितानि राज्यानि जित्वा तद्देशवासिनः ।
समुद्रतीरदेशेषु राष्ट्रैराङ्ग्लडचादिभिः ॥ १४ ॥

वत्सरे चैकोनशते ह्यष्टादशशतोत्तरे ।
उद्भूतः कलहो घोरो डचानामाङ्ग्लकैः सह ॥ १५ ॥

स दक्षिणाफ्रिकायुद्धमिति विख्यातलेखकैः ।
अभिज्ञैरितिहासस्य वर्णितो रोमहर्षणः ॥ १६ ॥

पराभूता डचा अन्ते ब्रिटिशा जयशालिनः ।
आङ्ग्लानां विपरीता तु भारतीयमनःस्थितिः ॥ १७ ॥

हिंद्वः कृगरादीनां शंसन्ति स पराक्रमम् ।
स्ववचोभिर्न शंसन्ति त्वाङ्ग्लसैनिकविक्रमम् ॥ १८ ॥

शस्त्रोपहतयोद्धॄणां दुःखोपशमहेतुना ।
प्रशंसितः शासनेनं यत्नो गांधीपुरस्कृतः ॥ १९ ॥

आङ्ग्लानामाधिपत्येन विषण्णा भारते जनाः ।
नैवैच्छन् विजयं तेषामन्तःकरणपूर्वकम् ॥ २० ॥

प्रसिद्धा केसरीपत्रे लेखमालातिविस्तृता ।
शंसितुं डचसैन्यस्य जङ्गमां युद्धपद्धतिम् ॥ २१ ॥

मराठासैनिकैः पूर्वं पद्धतिः सावलम्बिता ।
मोंग्लानां पारिपत्याय शिवभूपे दिवंगते ॥ २२ ॥

युद्धविद्यापरिचयः कर्तव्यस्तरुणैरिति ।
तीव्रेच्छा तिलकस्यासीद् देशोद्धारहितैषिणः ॥ २३ ॥

जपानस्याल्पकालेन महत्यासीत् समुन्नतिः ।
आशियावासिनां योग्य आदर्शस्तत्कृतिर्भवेत् ॥ २४ ॥

रूसजापानयोर्युद्धे ध्वंसितं शत्रुनौदलम् ।
जपानस्यातिशूरेण टोगोनाम्नाधिकारिणा ॥ २५ ॥

निर्दालिता रूससेना जापानीयाश्च सैनिकाः ।
नाविकाश्च जयं शूरास्तस्मिन् युद्धे समाप्नुवन् ॥ २६ ॥

आशियावासिनः स्फूर्तिं युद्धाद् रूसजपानयोः ।
प्रापुस्ते प्रत्ययं सुप्तप्रभावस्यात्मनस्तथा ॥ २७ ॥

युद्धे जेया युरोपीया पूर्वदेशनिवासिनाम् ।
पराभवेन रूसानां छिन्नः सर्वोऽपि संभ्रमः ॥ २८ ॥

राजकारणसंबन्धः पूर्वपश्चिमखण्डयोः ।
युरोपाशिययोर्लेखमालिकायां प्रपञ्चितः ॥ २९ ॥

राजनीतेर्विदेशानां ज्ञानमावश्यकं भवेत् ।
इति वै कथयामास तत्त्वं लेखे मुहुर्मुहुः ॥ ३० ॥

आङ्ग्लसत्ताभिमानाढ्यो गौरकायहितैकदृक् ।
हिंदाभ्युदयकार्यस्य विमुखः कर्झनः सदा ॥ ३१ ॥

न त्वां वै द्रष्टुमिच्छामि कॉटनं कर्झनोऽवदत् ।
संक्षेपेण प्रवक्ष्येऽहं कथां तां क्षोभकारिणीम् ॥ ३२ ॥

मुम्बापुर्यां चतुर्थेऽब्दे ऊनविंशशतोत्तरे ।
नेतारः प्रथमं दृष्टा मया राष्ट्रसभास्थले ॥ ३३ ॥

तत्पूर्वं न मया दृष्टं सभाया अधिवेशनम् ।
सर्वभारतनेतॄणां मेलनं स्फूर्तिदायकम् ॥ ३४ ॥

हेनरी कॉटनोऽध्यक्षः शासनस्य च सेवकः ।
सेवानिवृत्तो यो मग्नो हिन्दोद्धारसमुद्यमे ॥ ३५ ॥

वेडर्बर्नो हिन्दबन्धुर्गोखलेतिलकादयः ।
पारसीककुलश्रेष्ठा वाच्छामेथादयस्तथा ॥ ३६ ॥

लालाजिलेजपत्रायः पंजाबनरकेसरी ।
सुरेन्द्रो वङ्गदेशस्थो मालवीयश्च पण्डितः ॥ ३७ ॥

अन्ये च बहवो भक्ता देशार्थत्यक्तजीविताः ।
देशभाग्यविधातार आयाता अधिवेशनम् ॥ ३८ ॥

मया नमस्कृताः सर्वे मनसा भारतोत्तमाः ।
रता भारतसेवायां पुरीं मुम्बां समागताः ॥ ३९ ॥

राष्ट्रकल्याणवृद्ध्यर्थं विचारस्त्रिदिनं कृतः ।
स च प्रस्तावरूपेण सभायां संमतोऽभवत् ॥ ४० ॥

सभयासौ समादिष्टः कॉटनः कर्झनं प्रति ।
प्रदातुं वै स्वयं गच्छेत् सभासंमतनिर्णयान् ॥ ४१ ॥

अहमागन्तुकामोऽस्मि निर्णयार्पणहेतुना ।
सभादिष्टः प्रार्थयेऽहं स्थलकालविनिश्चयः ॥ ४२ ॥

कर्तव्यो भवता शीघ्रं दर्शनार्थं महात्मना ।
इति वै प्रेषितं पत्रं कॉटनेन च तं प्रति ॥ ४३ ॥

उपमर्दकरं तस्मै ददौ कर्झन उत्तरम् ।
व्हाइसरायो न शक्नोति द्रष्टुं राष्ट्रसभापतिम् ॥ ४४ ॥

न केवलं कॉटनस्य भारतस्य कृतस्तदा ।
अपमानः कर्झनेन प्रदायोत्तरमुद्धतम् ॥ ४५ ॥

तथैव निन्दिता तेन सम्राज्ञीतत्त्वघोषणा ।
अशक्याश्वासनं प्राह कर्झनस्तां निरङ्कुशः ॥ ४६ ॥

सत्यमूल्यं न जानन्ति लोका वै खिश्चनेतराः ।
यत्नः सर्वैश्च कर्तव्यः सत्यस्य परिपालने ॥ ४७ ॥

उक्त्वैवं निन्दितास्तेन संस्कृतिः ख्रिश्चनेतरा ।
हिन्दुबौद्धमुसल्मानधर्माचारप्रथास्तथा ॥ ४८ ॥

अवतारोऽवरंगस्य हिन्द्राष्ट्रविरोधकः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ४९ ॥

कर्झनो दुर्जनश्चायं कृतान्तोपमनिर्दयः ।
हिन्दस्वायत्तताशत्रुर्वावदूको दुराग्रहः ॥ ५० ॥

चीनराज्ञीदर्शनार्थमसत्यं कर्झनोऽवदत् ।
इति स्वपत्रे घोषेण साधारं च प्रकाशितम् ॥ ५१ ॥

लेखेन मोतिलालस्य पत्रिकायां प्रवर्तितम् ।
निन्दाचक्रं कर्झनस्य सवेगं भारतेऽखिले ॥ ५२ ॥

केसरी दर्शयामास कर्झनोक्त्यप्रमाणताम् ।
सत्यमेव विपर्यस्तं कर्झनेनाविवेकिना ॥ ५३ ॥

तद्विधानं निराधारमितिहासविसंगतम् ।
प्रशशंसुः सर्वधर्माः प्रतिष्ठां सत्यवादिनाम् ॥ ५४ ॥

संजाता आशियाखण्डे मुख्यधर्मप्रवर्तकाः ।
मनुबुद्धजिनख्रिस्तकर्णफूशमहंमदाः ॥ ५५ ॥

येरुशेलेमनगरे पुत्ररत्नमजीजनत् ।
धर्मप्रवर्तकं ख्रिस्तं माता मेरी कुमारिका ॥ ५६ ॥

पालिस्तानस्थनगरमाशियाखण्डसंस्थितम् ।
सुक्षेत्रं ख्रिस्तधर्मस्य पवित्रं खैस्तपूजितम् ॥ ५७ ॥

चिरं गता ह्यपख्यातिमाङ्ग्लाः सत्यापलापिनः ।
इति फ्रान्सादिदेशेषु न ज्ञातं कर्झनस्य किम् ॥ ५८ ॥

क्लैव्हहेस्टिंगयोः पापकृत्यानि विदितानि किम् ।
गर्वोद्धतस्य वै तस्य कर्झनस्यातिवादिनः ॥ ५९ ॥

निर्दिदेश स पौरस्त्यराजनीतिं विशेषतः ।
यत्रासत्यस्योपयोगो नीतिशास्त्रज्ञसंमतः ॥ ६० ॥

मायकेव्हीलीराजनीतिः कुटिलाख्याहताभवत् ।
जानन्त्येवेतिहासज्ञाः पाश्चात्त्यै राजकारणे ॥ ६१ ॥

इत्थं वै केसरीपत्रं कर्झनस्यापभाषितम् ।
असमञ्जसमित्याह लोकानां खेदकारकम् ॥ ६२ ॥

कुलपत्यासनस्थेन कर्झनेनानृतोक्तिभिः ।
विद्यापीठं कृतं भ्रष्टं सोद्वेगं तिलकोऽब्रवीत् ॥ ६३ ॥

विद्याभ्यासरतोऽपि मत्सरमदग्रस्तः कुतर्कस्थितो
वाक्यैर्येन निरर्गलेन गदितैस्तुच्छीकृतं भारतम् ।
सम्राजः पदमास्थितः प्रतिनिधेर्यो धूमकेतूपमो
बीजं क्षोभतरोरुवाप भरतस्योर्व्यां कुधीः कर्झनः ॥ ६४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे कर्झनोपप्लवनामा त्रिंशस्तरङ्गः ।

# एकत्रिंशस्तरङ्गः

विधातुं भारतस्यैक्यं पञ्चाङ्गैक्यानिवार्यता ।
आचारप्रभवो धर्म आचाराः कालयन्त्रिताः ॥ १ ॥

पञ्चाङ्गं ज्योतिषज्ञानां कालज्ञानस्य साधनम् ।
पञ्चाङ्गेषु तु रूढेषु दृश्यते नैकवाक्यता ॥ २ ॥

संजायते श्रमस्तेन कालज्ञाने जनस्य च ।
धर्मकृत्यं यथाकालं न कर्तुं शक्नुवन्ति ते ॥ ३ ॥

चन्द्रसूर्योपरागाणां युतीनां गुरुशुक्रयोः ।
ग्रहोदयास्तकालानां नैव दृक्प्रत्ययो भवेत् ॥ ४ ॥

संक्रान्तीनामृतूनां च दृश्यते वै विसंगतिः ।
कालप्रमादभूयिष्ठं पञ्चाङ्गं ग्रहलाघवम् ॥ ५ ॥

ग्रहस्थितिर्निश्चितासीदाचार्यैर्भास्करादिभिः ।
तद्यन्त्रसाध्यवेधेन पूर्वमब्दशताष्टकात् ॥ ६ ॥

तिलकेन कृतो यत्नो ज्योतिषज्ञानिमण्डले ।
अनुमत्या पण्डितानां पञ्चाङ्गोद्धारकर्मणः ॥ ७ ॥

परिषद् ज्योतिषज्ञानां मुम्बापुर्यामभूद्यदा ।
जातो डिसेम्बरे मासे राष्ट्रसंसद्महोत्सवः ॥ ८ ॥

तदा तिलकयत्नेन पण्डिताः संमतिं ददुः ।
संशोधनस्य कार्याय पञ्चाङ्गगणितस्य च ॥ ९ ॥

वटोदरनरेशेन द्रव्यं दत्तं सयाजिना ।
सिद्ध्यै परिषदो हेतोर्ज्योतिःशास्त्राभिमानिना ॥ १० ॥

दफ्तरी इत्युपाह्वेन केशवेन सुबुद्धिना ।
रचितः करणग्रन्थस्तिलकाज्ञानुयायिना ॥ ११ ॥

तत्र निर्दिष्टसिद्धान्तान् समाश्रित्य प्रवर्तितम् ।
शुद्धं तिलकपञ्चाङ्गं महाराष्ट्रविदर्भयोः ॥ १२ ॥

समादृतं पण्डितैर्यद् नवपञ्चाङ्गबालकम् ।
जातं तत् स्वर्गतेः पश्चात्तिलकस्य महात्मनः ॥ १३ ॥

नागपुर्यां दपतरिणा पञ्चाङ्गं तत् पुरस्कृतम् ।
रघुनाथः पुण्यपुर्यां तत्पञ्चाङ्गप्रवर्तकः ॥ १४ ॥

पैसाफण्डाभिधानस्य निधेरासीत् प्रवर्तकः ।
दामोदरसुतोऽन्ताजिः काळेवंशभवो द्विजः ॥ १५ ॥

देशोद्योगाभिवृद्ध्यर्थं स्थापितव्योऽतिसत्वरम् ।
निधिर्लोकप्रदत्तस्य प्रतिवर्षं धनस्य च ॥ १६ ॥

भारतीयो जनो दद्यात् प्रत्येकं द्रव्यमल्पकम् ।
संप्रेरितो देशभक्त्या यथाशक्ति निधिं प्रति ॥ १७ ॥

रूप्याणां वै कोटिकोटिः भविता संचयो यदि ।
प्रतिवर्षं निधेर्वृद्धिरुद्योगहितवर्धिनी ॥ १८ ॥

द्रव्यस्य संचयो जातः स्थाने स्थाने प्रयत्नतः ।
प्रायोऽन्ताजेरिति ज्ञात्वा तिलकः कृतनिश्चयः ॥ १९ ॥

दातुं प्रोत्साहनं तस्मै देशकार्यचिकीर्षवे ।
वर्णयामास पत्रे स्वे पैसाफण्डप्रयोजनम् ॥ २० ॥

वर्षत्रयावधौ जाता तस्य कार्यानुकूलता ।
महाराष्ट्रविदर्भेषु देशसेवाभिलाषिणाम् ॥ २१ ॥

ततोऽन्ताजिः प्रचारार्थं जगाम नगरान् बहून् ।
लोकेभ्यः कथयामास निध्युद्दिष्टं सविस्तरम् ॥ २२ ॥

मण्डलानि स्थापयित्वा नगरप्रमुखेषु सः ।
वेगमुत्पादयामास द्रव्यसंचयकर्मसु ॥ २३ ॥

महासभासमारोहं द्रष्टुं मुम्बापुरीं जनाः ।
समायातास्तेषु केचित् काळेकार्याभिमानिनः ॥ २४ ॥

समाहूता च बालेन सभा निधिहितैषिणाम् ।
पैसाफण्डसभा तत्र सभासद्भिर्नियोजिता ॥ २५ ॥

विनियोगो निधेः कार्यो भारतोद्योगवृद्धये ।
निर्बन्धं स्थापयामासुस्तं सभाकार्यचालकाः ॥ २६ ॥

शतकार्धाधिके काले पैसाफण्डस्य चालकैः ।
काचशालादिनिर्माणप्रयोगेषु कृतो व्ययः ॥ २७ ॥

जोशीवंशोद्भवस्तस्मिन् वासुदेवः प्रयत्नवान् ।
ज्ञातार्थव्यवहारस्य तिलकस्य सुहृद्वरः ॥ २८ ॥

विख्याते कालिकास्थाने लङ्कपुर्यामनन्तरम् ।
महासभासमारोहोऽभवद् मार्गनिदर्शकः ॥ २९ ॥

अगच्छत्तिलकस्तत्र देशकार्यपरायणः ।
सभास्थाने तथान्यत्र वन्दितो वङ्गबन्धुभिः ॥ ३० ॥

उच्चशिक्षणचर्चायां सभाया अधिवेशने ।
तिलको दर्शयामास दोषान् भारतपद्धतेः ॥ ३१ ॥

श्रेयस्करा जपानीया विद्यापीठस्य पद्धतिः ।
तत्स्वीकारश्च कर्तव्यस्तारतम्येन भारते ॥ ३२ ॥

लालमोहनघोषेण तिलकः सुप्रशंसितः ।
स्वागतप्रमुखेनैव समारोपस्य भाषणे ॥ ३३ ॥

दत्त्वा राष्ट्रसभास्थाने व्याख्यानं शास्त्रसंमतम् ।
संप्रार्थितेन वङ्गस्थैर्हिन्दुधर्माभिमानिभिः ॥ ३४ ॥

महिमा हिन्दुधर्मस्य तिलकेन विवेचितः ।
वेदमूलस्य संसारे सन्मार्गपथदर्शिनः ॥ ३५ ॥

चकार तिलकः पुण्यं विवेकानन्ददर्शनम् ।
बिल्वपूराश्रमं गत्वा गङ्गातीरेऽतिशोभनम् ॥ ३६ ॥

वार्तालापो दीर्घकालमभूत् सुकृतिनोस्तयोः ।
जम्बुद्वीपसमुन्नत्यै सततं यत्नशीलयोः ॥ ३७ ॥

आविष्कृतस्तयोर्योगे ज्ञानकर्मसमुच्चयः ।
चर्चासीद् बन्धमोक्षाय भारतस्योपकारिणी ॥ ३८ ॥

समीक्षणं कृतं ताभ्यां देशकालपरिस्थितेः ।
उत्थानस्य च मार्गाणां स्वातन्त्र्यप्राप्तये तदा ॥ ३९ ॥

हन्तासावन्तिमो योगस्तिलकस्वामिनोस्तदा ।
जातश्चाल्पावधौ स्वामी विलीनः परमात्मनि ॥ ४० ॥

निमग्नं भारतं सर्वमाकुमारीहिमालयम् ।
विवेकानन्दनिर्वाणवार्तया दुःखसागरे ॥ ४१ ॥

तिलको वर्णयामास स्वामिनो गुणगौरवम् ।
वेदान्तभाष्यकारस्य वैश्वधार्मिकमेलने ॥ ४२ ॥

यथा द्वैपायनो व्यासो द्वापरे धर्मरक्षकः ।
यथा वा शंकराचार्यो बौद्धपाखण्डनाशकः ॥ ४३ ॥

पाश्चात्त्यजडवादस्य ग्रासाद् वेदपथः शुचिः ।
रक्षितः स्वामिना तद्वत् तर्कशुद्धविवेचनैः ॥ ४४ ॥

बृहस्पतिसमप्रज्ञस्यायुषोऽत्यल्पकालता ।
मन्ये दुःखपराकाष्ठा भारतीयजनस्य सा ॥ ४५ ॥

उवास कालिकास्थाने समारोहादनन्तरम् ।
चिकीर्षुरन्यकार्याणि तिलको मित्रसंयुतः ॥ ४६ ॥

आसीच्च कालिकापुर्यां साध्वी माताजिसंज्ञका ।
जनसेवारता देवी शिक्षाकेन्द्रमचालयत् ॥ ४७ ॥

विज्ञापितस्तयागच्छत् तिलकस्तन्निरीक्षितुम् ।
समित्रः प्राप संतोषं शिक्षाकेन्द्रव्यवस्थया ॥ ४८ ॥

दृष्ट्वा साध्व्या महाराष्ट्रभाषाभाषणकौशलम् ।
तिलकस्तद्वयस्याश्च प्रापुः परमविस्मयम् ॥ ४९ ॥

तस्या वै पूर्वजाः पूर्वमागता दक्षिणापथात् ।
तंजावरे वसन्ति स्म व्यंकोजीनृपशासिते ॥ ५० ॥

जन्मभाषा महाराष्ट्री बह्वायासेन रक्षिता ।
महाराष्ट्रजनैः सर्वैस्तंजावरनिवासिभिः ॥ ५१ ॥

तस्या आस्तां महाराष्ट्रीभाषिणौ पितराविति ।
विज्ञातुं तत्कथां सर्वां समुत्पन्नं कुतूहलम् ॥ ५२ ॥

कस्मात् तया कृतस्त्यागः स्वदेशस्य तथा कदा ।
कालिकानगरे किं वै निवासस्य प्रयोजनम् ॥ ५३ ॥

तिलकस्नेहिचित्तेषु व्युत्थिता प्रश्नमालिका ।
पप्रच्छुः सादरं ते तां प्रश्नान् विनयपूर्वकम् ॥ ५४ ॥

साध्वी निवेदयामास दुःखदामात्मनः कथाम् ।
अल्पशब्दैः संनियम्य शोकावेगं सुदुःसहम् ॥ ५५ ॥

विवाहग्रन्थिना बद्धा वयस्यप्राप्तयौवने ।
प्रादुर्भूते तु तारुण्ये जाताहं गतभर्तृका ॥ ५६ ॥

श्रवणेन पुराणानां वृद्धानां सेवया गृहे ।
देवद्विजप्रार्चनेन नीतः कालोऽतिदारुणः ॥ ५७ ॥

दुर्वासनाविनाशाय सत्संगस्तीर्थसेवनम् ।
सद्ग्रन्थपठनं चैव साधनानीति कथ्यते ॥ ५८ ॥

विनिश्चितं मया कर्तुं तीर्थयात्रानिषेवणम् ।
द्रष्टुमुत्तरतीर्थानि निष्क्रान्तास्मि गृहादहम् ॥ ५९ ॥

ज्योतिर्लिङ्गं सुविख्यातं पुण्यं पशुपतीश्वरम् ।
संस्थितं द्रष्टुकामाहं नेपाले काष्ठमण्डपे ॥ ६० ॥

प्राविशं रमणीयं तं देशं च वनशोभितम् ।
प्रालेयधवलोत्तुङ्गशृङ्गमालाविभूषितम् ॥ ६१ ॥

कियान् कालो व्यतीयाय पूजायामीश्वरस्य मे ।
संजातो विदुषस्तत्र दैवयोगात् समागमः ॥ ६२ ॥

तद्गुणैर्मे समाकृष्टं चित्तं वै चानुरक्तता ।
समकालं समुत्पन्ना चित्तयोरावयोरपि ॥ ६३ ॥

विवाहविधिना बद्धौ न्यवसाव ततः परम् ।
गृहिकर्मरतौ नित्यं संतोषं दातुमुत्सुकौ ॥ ६४ ॥

अहमन्वभवं नित्यं नेपालेशकृतादरम् ।
गृहस्थाश्रमसौख्यं च मानं जनपदेष्वपि ॥ ६५ ॥

ज्ञातं नैव मया कालो सुखस्य च कथं गतः ।
असुखस्य क्षणे प्राप्ते वियोगाद् वल्लभस्य मे ॥ ६६ ॥

उपदेशेन सिद्धानां विवेकेनापि चात्मनः ।
भोगे विरक्तिरुत्पन्ना विषयाणां शनैर्मम ॥ ६७ ॥

विश्रान्तिर्भगवद्ध्याने जनसेवारतिस्तथा ।
युक्ताहारविहारत्वं वानप्रस्थव्रतोचितम् ॥ ६८ ॥

विद्यादानाय बालानां यत्नः स्वल्पः कृतो मया ।
साहाय्येन सुशीलानां देशसेवाभिलाषिणाम् ॥ ६९ ॥

भवत्पादरजःस्पर्शात् संस्थाहल्येव तेजसा ।
संपन्नाद्याभवद् मन्ये गताहं च कृतार्थताम् ॥ ७० ॥

साध्व्या वृत्तान्तमाकर्ण्य नमस्कृत्य च तां तदा ।
निष्क्रान्तास्तद्गृहात् सर्वे तिलकेन सहागताः ॥ ७१ ॥

मित्रोत्तमो वासुदेवो गुप्तकार्यपटुः सुधीः ।
ददर्श देवीं माताजिं पुनश्च तिलकेच्छया ॥ ७२ ॥

त्रिभिरेव जनैर्ज्ञातः संवादो योऽभवत् तयोः ।
जोशीवंश्यो वासुदेवः खापर्डेतिलकौ तथा ॥ ७३ ॥

कृष्णः खाडिल्करोपाह्वः केसरीपत्रलेखकः ।
नेपाले नवकार्यार्थं तिलकेन नियोजितः ॥ ७४ ॥

उवास कृष्णो नेपाले कालं वर्षद्वयाधिकम् ।
नेपालेशाज्ञया कुर्वन्निष्टिकानिर्मितिं तदा ॥ ७५ ॥

नेपालेशस्य साह्येन कर्तुं शस्त्रविनिर्मितिम् ।
प्रेषितस्तिलकेनासीत् कृष्णः शिष्योत्तमो नवः ॥ ७६ ॥

योजना सा गतान्तं वै मन्त्रभेदादकालिकात् ।
इति केचिद् वदन्ति स्म तिलकस्यानुयायिनः ॥ ७७ ॥

आयातः स्वगृहं कृष्णः केसरीपत्रलेखने ।
नियुक्तोऽभूद् यथापूर्वं वङ्गभङ्गसमुद्भवे ॥ ७८ ॥

नेपालगमनोल्लेखो जोशीकृष्णचरित्रयोः ।
लेखकाभ्यां कृतः स्पष्टः साधार इति भाति मे ॥ ७९ ॥

स्वदेशहितकारिणी स्वजनसंघसंवर्धिनी
अधःपतनवारिणी प्रगतिमार्गसंबोधिनी ।
पुराणमतमन्थनोत्थितसुधारसस्यन्दिनी
मतिस्तिलकचोदिता भरतभूमिसंजीवनी ॥ ८० ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे मार्गशोधनोद्योगवर्णननामा
एकत्रिंशस्तरङ्गः ।

# द्वात्रिंशस्तरङ्गः

बालादेशप्रचारार्थं विदर्भेषु कृतो महान् ।
विचारपूर्वको यत्नो नेतृभिर्दीर्घदर्शिभिः ॥ १ ॥

संक्षेपेणेतिवृत्तं तत् कथये श्रुतिमोदकम् ।
स्वधर्मदेशयोः सम्यगभिमानस्य वर्धकम् ॥ २ ॥

आङ्ग्लव्यापारवृद्ध्यर्थं शासनेन च भारते ।
समादिष्टं करादानं देश्यवस्तुविनिर्मितौ ॥ ३ ॥

संतप्ता वस्त्रनिर्माणव्यवसायैकजीविनः ।
निर्णयः शासनस्यासौ तदुद्योगविनाशकः ॥ ४ ॥

वर्षे षण्णवतितमे ह्यष्टादशशतोत्तरे ।
समेधिता नागपूरे होलिकाया महोत्सवे ॥ ५ ॥

आङ्ग्लवस्त्रशिरस्त्राणहोलिका देशसेवकैः ।
आङ्ग्लकृत्यनिषेधाय स्वमन्योर्दर्शनाय च ॥ ६ ॥

स्वदेशीव्रतदीक्षापि स्वीकृता बहुभिर्जनैः ।
तद्व्रतप्रीतिरुत्पन्ना तदैव हृदये मम ॥ ७ ॥

आसन् नागपुरे स्वल्पाः स्वदेशीव्रतपालकाः ।
अग्नौ समर्पणात् पूर्वमाङ्ग्लदेशीयवाससाम् ॥ ८ ॥

वृद्धा विद्यार्थिनो मल्लविद्यासु निपुणा जनाः ।
बभूवुः शिल्पकाराश्च स्वदेशीव्रतिनस्ततः ॥ ९ ॥

भगीरथप्रसादश्च लालाजीति सुविश्रुतः ।
हिस्लापे गणिताचार्यो राष्ट्रसेवापरायणः ॥ १० ॥

विनायकात्मजो जोशीकुलजः केशवाभिधः ।
सिटिस्कूलाख्यशालायाः शिक्षकाणां शिरोमणिः ॥ ११ ॥

नगरे प्रमुखावास्तां स्वदेशीव्रतपालकौ ।
स्वदेश्येतरवस्त्राणां न स्पर्शमपि चक्रतुः ॥ १२ ॥

देशीव्रतप्रसाराय याताः केचित् प्रचारकाः ।
महाराष्ट्राद् नागपूरं विदर्भं चामरावतीम् ॥ १३ ॥

भिडेनामा भट्टजीति ख्यातो मल्लकलापटुः ।
शालायाममरावत्यां क्रीडाचार्योऽभवत् किल ॥ १४ ॥

पुरस्कृता महाशाला खापर्डेप्रमुखैर्जनैः ।
अङ्गीकृतं च दायित्वं विद्वद्भिः शिक्षणस्य च ॥ १५ ॥

कटीप्रभृतयो योग्या नागाख्यनगरागताः ।
आचार्या व्रतिनस्तत्र ग्रामस्थो वामनस्तथा ॥ १६ ॥

क्रूरदण्डप्रदानेन तिलकायाधिकारिभिः ।
गतो वृद्धिं जनक्षोभो कॉंग्रेसस्योत्सवेन च ॥ १७ ॥

चतुर्थेऽब्दे शके ख्रैस्त ऊनविंशशतोत्तरे ।
संहतास्तिलकावासे मुम्बय्यामनुयायिनः ॥ १८ ॥

खापर्डेप्रमुखाः श्रेष्ठा नागपूरविदर्भयोः ।
केसरीप्रोक्तमार्गस्य राजनीतेर्विशेषतः ॥ १९ ॥

अविलम्बप्रसाराय पौरजानपदेष्वपि ।
पुण्यपत्तनसंबन्धसुदृढीकरणाय च ॥ २० ॥

ददुराश्वासनं सर्वे तिलकाय समुत्सुकाः ।
साहाय्यस्य प्रयत्नानां चोदितानां तदिच्छया ॥ २१ ॥

विदर्भविषयः सर्वो विभक्तो वर्धया द्विधा ।
एकः पूर्वः पश्चिमोऽन्यो चतुर्जिल्हान्वितावुभौ ॥ २२ ॥

नागपूरेऽमरावत्यां तिलकस्यानुयायिनः ।
सहस्राधिकसंख्याकाः मुंजेखर्परयोः श्रमात् ॥ २३ ॥

मुंजेठेंगड्युधोपाह्वा वैद्यालेकरसंज्ञकौ ।
घुलेपंडितनीयोग्योगलेकोल्हट्करादयः ॥ २४ ॥

देशमूखः कावळे च चांदावर्धाप्रदेशयोः ।
भंडारके प्रवादीच पांढरीपंडिताह्वयः ॥ २५ ॥

पूर्वभागस्य भक्तानां कथिता नाममालिका ।
प्रमुखाः पश्चिमे भागे खर्परस्यानुयायिनः ॥ २६ ॥

नामानि कथयिष्यामि विख्यातानि मनीषिणाम् ।
यवत्माळबुलस्थानाकोलाऽमरपुरेषु ये ॥ २७ ॥

न्यवसन् पुण्यवद्भ्योऽहमर्पयित्वा नमस्कृतिम् ।
देशसेवैकबुद्धिभ्यः पूजितेभ्यः सदा जनैः ॥ २८ ॥

जोशीकुलोद्भवो वीरो वामनस्तत्सखः प्रियः ।
तत्परो लोकसेवायां शामरावः प्रियंवदः ॥ २९ ॥

सदाशिव इति ख्यातो दुराणिकुलभूषणः ।
हतो यस्य पिता युद्धे स्तेनैः सह धृतायुधैः ॥ ३० ॥

अर्जितं येन नैपुण्यमाङ्ग्लगीर्वाणभाषयोः ।
वाग्मी शूर उदारो यो रसिको नाट्यलोलुपः ॥ ३१ ॥

पाटिलो जयरामाख्यः क्रीडाव्यायामशिक्षकः ।
उच्चशिक्षणशालायां तरुणानां हितप्रदः ॥ ३२ ॥

प्रवादी यशवंताख्यो देशपांडेकुलोद्भवः ।
प्रवादी गोखलेवंश्यो गुलाबस्तस्य लेखकः ॥ ३३ ॥

श्रीपादसंज्ञितस्तांबेवंशजो यः प्रतिष्ठितः ।
तदामरावती क्षेत्रे चासीत् प्रवादव्यवसायिषु ॥ ३४ ॥

मल्लविद्याकलाभिज्ञो तुकारामश्च नापिकः ।
दुर्गेशास्त्रीति विख्यातो ज्योतिषज्ञशिरोमणिः ॥ ३५ ॥

यवत्‌माळविभागेषु गणेशस्यानुयायिनाम् ।
परांजपेकुले जातो बाबाख्यो मूर्ध्नि वर्तते ।। ३६ ।।

स्वर्णकारो गणपतिर्माळवीवंशदीपकः ।
देशभक्तोपयोगाय द्रव्यदानं चकार यः ।। ३७ ।।

देशोद्धारैकचित्तानां क्रान्तिमार्गानुगामिनाम् ।
विपत्तावाश्रयस्थानं गृहं गणपतेरभूत् ।। ३८ ।।

अण्णा जतकरः सुज्ञः 'स्वदेशी' दृढनिश्चयः ।
मितभाषी स्मितमुखः परार्थघटकः सदा ।। ३९ ।।

बापटो लक्ष्मणो ज्येष्ठो रामचन्द्रः कनिष्ठकः ।
देवश्च बळिरामश्च स्वर्णकारसुहृत्तमाः ।। ४० ।।

कृष्णाख्यः पेशवेवंशसंभूतो बुद्धिमान् युवा ।
प्रवादिष्वल्पकालेन यः प्राप स्थानमुत्तमम् ।। ४१ ।।

ओकोपाह्वः श्यामनामा शिवरामाभिधोऽपि वा ।
आङ्ग्लसेवानिवृत्तोऽभूच् चिकीर्षुर्लोकसंग्रहम् ।। ४२ ।।

दत्तात्रेयः कृष्णसुतो काणेवंशस्य भूषणम् ।
भक्तोत्तमो विदर्भस्य तिलकस्यानुगस्तथा ।। ४३ ।।

'सँडो' इति विदर्भस्य ख्यातो व्यासो गिरांपतिः ।
खामग्रामे वसन् नित्यं लोकसेवां करोति यः ।। ४४ ।।

अकोलायुवकश्रेष्ठो मामाख्यो जोगळेकरः ।
वयोवृद्धेषु देसाईदातेप्रभृतिसज्जनाः ।। ४५ ।।

श्रीनिवासो वणीग्रामे देवभक्तशिरोमणिः ।
श्रद्धया केसरीपत्रं योऽपठद् गुरुवासरे ।। ४६ ।।

कारंजनगरे पुण्ये श्रीनृसिंहसरस्वतेः ।
जन्मस्थाने घुलेनामा तिलकस्योत्तमोऽनुगः ।। ४७ ।।

ग्रामे परतवाडाख्ये बाबासाहेबनामकः ।
खापर्डेपक्षमुखरः पांगारकरवंशजः ॥ ४८ ॥

सप्रेमाधवरावेण नागपुर्यां प्रकाशितः ।
हिन्दीभाषिप्रबोधाय स्फूर्तिदो हिन्दकेसरी ॥ ४९ ॥

अजिंठाधित्यकासंस्थे जिल्हाग्रामे प्रवर्तितम् ।
चक्रं राष्ट्रविचाराणां यवतमाळे तपस्विना ॥ ५० ॥

पत्रं हरिकिशोराख्यं गोस्वामिकुलनन्दनः ।
नवं संपादयामास पृथ्वीगीराभिधो युवा ॥ ५१ ॥

साप्ताहिकं विदर्भेषु शीघ्रं प्रख्यातिमाययौ ।
राष्ट्रैकहितप्रश्नानां निर्भयप्रतिपादनैः ॥ ५२ ॥

मुम्बाप्रदेशे स्तम्भा वै जिल्हास्थानेषु संस्थिताः ।
तिलकोद्योगहर्म्यस्य प्रबला दिग्गजा इव ॥ ५३ ॥

देशपांडेऽभिधो वक्ता नगरस्थो जनप्रियः ।
प्रवादिनामग्रगण्यो नेता जनपदस्य च ॥ ५४ ॥

शंकरः खानदेशस्थो विवेकी लोकविश्रुतः ।
समर्थभक्तो देवो यस्तिलकस्य मतानुगः ॥ ५५ ॥

नासिके पावने क्षेत्रे खरेपाटणकरावुभौ ।
बालतत्त्वविचाराणां संप्रसाराय दीक्षितौ ॥ ५६ ॥

वैद्यश्चिन्तामणिर्नेता कल्याणस्थो बहुश्रुतः ।
विख्यातो भारताचार्यस्तैलके राजकारणे ॥ ५७ ॥

बोडसो मुम्बईवासी देशमूखकुलोद्भवः ।
नानाभिधो भिषग्वर्यो धनिकोऽण्णाभिधस्तथा ॥ ५८ ॥

ब्रह्मविद्यारतो जम्नादासो यो द्वारकात्मजः ।
नवं तिलकपक्षं यो राजकीयं समाश्रितः ॥ ५९ ॥

सातारानगरे श्रेष्ठो दादाख्यो विधिपण्डितः ।
रघुनाथ इति ख्यातः करंदीकरवंशजः ॥ ६० ॥

विष्णुः कोल्हापुरे शान्त आचार्यपदमास्थितः ।
विजापुरकरोपाह्वो ग्रन्थमालाप्रवर्तकः ॥ ६१ ॥

सोलापुरे धनपतिः कौजलगिश्च विजापुरे ।
बेळवीयाळगी बेळग्रामे गङ्गाधरस्तथा ॥ ६२ ॥

पुण्यपुर्यां वासुदेवश्चित्रशालाप्रचालकः ।
शिवरामः काळपत्रलेखकः स्फूर्तिदायकः ॥ ६३ ॥

वक्रोक्त्याद्यायुधाभ्यासैर्महाराष्ट्राभिमानिनाम् ।
क्रान्तिमार्गपुरस्कर्ता तरुणानां हृदि स्थितः ॥ ६४ ॥

दामलेकुलजो धीरः सीतारामश्च बुद्धिमान् ।
कृष्णश्च नरसिंहश्च केसरीपत्रलेखकौ ॥ ६५ ॥

भोपट्करो लक्ष्मणश्च भालाकारो तदग्रजः ।
सत्यव्रतो बापटश्च मंडलीकः सुधीस्तथा ॥ ६६ ॥

ज्योतिर्विद् रघुनाथश्च कवडे व्याधिचिकित्सकः ।
तिलकस्यानुगा एते विविधव्यवसायिनः ॥ ६७ ॥

देशस्थाः कोकणस्थाश्च कऱ्हाडस्थाश्च सज्जनाः ।
गोदावरीतटस्थाश्च कृष्णातीरनिवासिनः ॥ ६८ ॥

वरदाप्रणितातीरे वैनगङ्गातटे तथा ।
वसन्ति कार्यकर्तारः पूर्णाकुलनिवासिनः ॥ ६९ ॥

तिलकाज्ञानुसारेण तिलकादेशकारिणः ।
आङ्ग्लानामधिराज्यस्य प्रतिकाराय तत्पराः ॥ ७० ॥

प्रसृता दण्डकारण्ये सहस्राणि सहस्रशः ।
अल्पानामेव निर्देशः कृतः संक्षेपहेतुना ॥ ७१ ॥

अज्ञानान्धजनाय दृष्टिविभवं ज्ञानप्रकाशेन यो
दत्त्वात्मार्पणवृत्तिसेवककुलं विस्तारयामास च ।
विश्वासं तिलको महिम्नि च पथः प्रोक्तस्य नित्यं स्वयं
शुद्धेनाचरणेन लोकहृदये संपादयामास सः ॥ ७२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे तिलकानुयायिविस्तारनामा द्वात्रिंशस्तरङ्गः ।

# त्रयस्त्रिंशस्तरङ्गः

हिन्दस्वातन्त्र्ययुद्धस्य वङ्गभङ्गाख्यमुत्तमम् ।
पर्व क्रान्तिमयं घोरं युवकोत्साहवर्धनम् ॥ १ ॥

वर्णये वङ्गभक्तानां कथास्ता रोमहर्षणाः ।
तर्पिता यैर्निजप्राणबलिदानेन जन्मभूः ॥ २ ॥

लालाजीबालपालानामधिष्ठात्री प्रभावती ।
आन्दोलनस्य तत्काले त्रयी भारतपूजिता ॥ ३ ॥

जहौ राष्ट्रसभा दीनं भिक्षापात्रं करस्थितम् ।
स्वावलम्बननामानं खड्गं हस्ते दधार सा ॥ ४ ॥

कथयिष्ये यथाज्ञानमितिहासं मनोरमम् ।
यस्य श्रवणमात्रेण वृद्धोऽपि तरुणायते ॥ ५ ॥

द्वादशाद्भुतकार्याणां घोषणां कर्झनोऽकरोत् ।
प्रयत्नानां पराकाष्ठां तत्सिद्ध्यर्थं समाचरत् ॥ ६ ॥

विद्यापीठप्रदत्तायाः शिक्षाया वै परीक्षणम् ।
कृत्वा नियन्त्रणे तस्याः कर्झनेन विनिश्चितम् ॥ ७ ॥

परीक्षार्थिसमूहस्य सन्ति केन्द्राणि भारते ।
विद्यापीठानि सर्वाणि न तु ज्ञानार्थिनामिति ॥ ८ ॥

ततो विधानसंस्थायां विद्यापीठसमुन्नतेः ।
सिद्ध्यर्थं शासनेनैकं संविधानं प्रवर्तितम् ॥ ९ ॥

प्रकाशनाद् विधानस्य पत्रिकायामनन्तरम् ।
ग्याझेट् इति प्रसिद्धायां जातमान्दोलनं महत् ॥ १० ॥

पीठस्वातन्त्र्यसंकोचि प्रतिगामीति सर्वथा ।
देशकार्यधुरीणैश्च पत्रकारैश्च निन्दितम् ॥ ११ ॥

अयं विषघटः साक्षादवलिप्य मुखे मधु ।
स्थापितः पुरतोऽस्माकं कर्झनेन दुरात्मना ॥ १२ ॥

गोपालो गोखलेवंश्य आशुतोषश्च बुद्धिमान् ।
विधानस्य विरोधाय कटिबद्धौ बभूवतुः ॥ १३ ॥

कर्झनश्चात्मसंतुष्टो दृष्ट्वा यत्नं विरोधिनाम् ।
महतीं चिन्तयामास तत्प्रतीकारयोजनाम् ॥ १४ ॥

दुर्योधनो पुरस्कृत्य रणे भीष्मं पितामहम् ।
प्रतियोद्धुं पाण्डवादीन् गतचिन्तोऽभवद् यथा ॥ १५ ॥

रामकृष्णं पुरस्कृत्य कर्झनोऽप्यभवत् तथा ।
प्रतियोद्धुमाशुतोषगोपालादीन् विरोधिनः ॥ १६ ॥

वाग्युद्धमभवद् घोरं कलकत्तानृपालये ।
हिन्दसाम्राज्यसंस्थाया यत्रासीदधिवेशनम् ॥ १७ ॥

पाण्डवानां यथा पार्थः कुरुक्षेत्रे रणे पुरा ।
गोपालो लोकपक्षस्य सेनानीत्वं तथाकरोत् ॥ १८ ॥

कर्झनस्यापसिद्धान्तबाणास्तेन निराकृताः ।
पुरो यातो रामकृष्णः शास्त्राभ्यासजडस्तदा ॥ १९ ॥

कौतूहलं समुत्पन्नं सभास्थाने तदा महत् ।
युवप्रवयसोर्युद्धप्रसङ्गेन सभासदाम् ॥ २० ॥

आसीत् पूज्यो रामकृष्णो गोपालस्य महामतेः ।
युद्धस्य भीष्मार्जुनयोः कलौ जाता प्रतिकृतिः ॥ २१ ॥

ऊचुः सभासदः सर्वे श्रुत्वा विवदतोस्तयोः ।
अन्योन्यप्रोक्तसूक्तीनां खण्डनं मण्डनं तथा ॥ २२ ॥

धूर्तत्रयकथा पञ्चतन्त्रग्रन्थाद् निरूपिता ।
रामकृष्णेन वृद्धेन प्राचार्येण स्वभाषणे ॥ २३ ॥

अहं मन्ये पशुस्थाने कर्झनेन पितामहः ।
रामकृष्णोऽतिधूर्तेन नियुक्तः कार्यसाधुना ॥ २४ ॥

प्रशासनस्य सेवायां रामकृष्णवयो गतम् ।
संजाता तेन तद्वृत्तिः शासनेशानुवर्तिनी ॥ २५ ॥

निःस्पृहत्वं न संपृक्तं दृश्यते राजसेवया ।
न्यायप्रियो रामशास्त्री विरलस्त्वस्ति भूतले ॥ २६ ॥

प्रशासनसदस्याश्च कृताः सर्वे निरुत्तराः ।
गोपालेनाशुतोषेण तथान्यैर्देशसेवकैः ॥ २७ ॥

बाहुल्याद् वै शासनस्य सांसदीयसभासदाम् ।
अरण्यरोदनं जातं वक्तृत्वं लोकपक्षिणाम् ॥ २८ ॥

मतदानक्षणे भग्नमैक्यं तत्र सभासदाम् ।
अनुकूलं विधानस्य वङ्गवीरो ददौ मतम् ॥ २९ ॥

परिवर्तनमुद्दिश्य वङ्गनेतुर्मतस्य तत् ।
कुतर्कांश्चक्रिरे प्राय आशुतोषाभ्यसूयकाः ॥ ३० ॥

सभायाः संमतिः प्राप्ता बहुसंख्याबलेन च ।
राजप्रतिनिधिस्तस्मै प्रादात् संमतिमात्मनः ॥ ३१ ॥

मतं नादृत्य लोकानां कर्झनो राज्यशासनम् ।
अचालयदहंमन्यो लोकविद्वेषभाजनः ॥ ३२ ॥

विद्यापीठविधानस्य निर्णयान्ते समागतः ।
कालिकापत्तनाच्च श्रीमान् गोपालश्चामरावतीम् ॥ ३३ ॥

कर्झनस्य प्रतिद्वन्द्वी वाग्मी वै गोखलेऽन्वयः ।
गोपालो भारते प्राप प्रख्यातिं महतीं तदा ॥ ३४ ॥

अर्थशास्त्ररहस्यज्ञो देशसेवादृढव्रतः ।
महाराष्ट्रे न तत्तुल्यो प्राज्ञोऽभूदाङ्ग्लघाबपटुः ॥ ३५ ॥

सज्जना अमरावत्याः सुमनोर्पणहेतुना ।
सन्धिकं वटनेरस्य सत्कारायातिथेर्गताः ॥ ३६ ॥

मार्गेषु पूजितः पौरैरानीतो नगरं प्रति ।
उवास यजमानस्य रङ्गनाथस्य सद्मनि ॥ ३७ ॥

मन्दिरं ब्रह्मविद्याया विशालमपि तद् लघु ।
श्रोतृसंख्याबहुत्वेन गोपाले सति वक्तरि ॥ ३८ ॥

विद्यापीठविधानस्य स्वव्याख्याने प्रदर्शितम् ।
अनिष्टं प्रतिगामित्वं गोपालेनातिलीलया ॥ ३९ ॥

मुकर्जिमाशुतोषाख्यं निन्दयामास भाषणे ।
पक्षद्रोहात्मिका वृत्तिर्गर्हणीयेति सोऽवदत् ॥ ४० ॥

तस्मिन् कालेऽमरावत्यां शाले द्वे लोकचालिते ।
काशीताई–उच्चशाला राष्ट्रीया नूतना तथा ॥ ४१ ॥

राष्ट्रीयशालाप्रमुखो पांगारकरसंज्ञकः ।
लालाभगीरथो विद्वानासीत् तस्य सहायकः ॥ ४२ ॥

संस्थायां च द्वितीयस्यां श्रीनिवासाभिधो महान् ।
गुरुर्मुख्यः प्रवीणो यः पाणिनीये च दर्शने ॥ ४३ ॥

आङ्ग्लभाषाशिक्षकोऽहं तत्संस्थायां सहायकः ।
देशभक्तो वामनोऽस्मत्सहकारी स वर्तते ॥ ४४ ॥

स्थापितं सुज्ञनेतॄणामुभयोरेकमण्डलम् ।
गणेशनामा खापर्डे तदध्यक्षपदे स्थितः ॥ ४५ ॥

मोरेश्वरो रङ्गनाथस्तस्य ज्येष्ठसभासदौ ।
दक्षौ प्रयत्नशीलौ तौ शालोन्नतिहितैषिणौ ॥ ४६ ॥

लोकशिक्षणसंस्थानां गोपालश्चालकाग्रणीः ।
विज्ञापितो गणेशाद्यैः संस्थां द्रष्टुमुपागतः ॥ ४७ ॥

राष्ट्रीयशालां गत्वादौ पश्चाच् शालां ममागमत् ।
कति वै श्रेणयः सन्ति शालायां भवतामिति ॥ ४८ ॥

पर्यपृच्छत् स मां प्रश्नमवोचमहमुत्तरम् ।
एकादश श्रेणयोऽत्र श्रुत्वा तत् सोऽतिविस्मितः ॥ ४९ ॥

श्रेणीसंख्यावबोधाय मया तस्मै निवेदितम् ।
कक्षास्तिस्रः शिक्षणस्य प्रथमा मध्यमोत्तमा ॥ ५० ॥

प्रथमायां मातृभाषाध्याय एव प्रधानतः ।
चतस्रः श्रेणयस्तस्यामध्यायार्थं प्रकल्पिताः ॥ ५१ ॥

तथा च श्रेणयस्तिस्रो मध्यमायां विनिर्मिताः ।
अध्यायस्याङ्ग्लभाषायाः प्रारम्भो हि भवेदिह ॥ ५२ ॥

उत्तमायां च कक्षायां चतस्रः श्रेणयो मताः ।
विद्यापीठप्रवेशार्हाः सन्ति छात्रा यशस्विनः ॥ ५३ ॥

एकादशाब्दसंख्यातः श्रेणीसंख्यानुसारतः ।
विनिर्दिष्टो विदर्भेषु शालीयाध्ययनावधिः ॥ ५४ ॥

गोपालः सस्मितं प्राह समाकर्ण्य वचो मम ।
ज्ञातं खलु समस्तं तद् यदुक्तं भवताधुना ॥ ५५ ॥

अङ्गीकृता विदर्भेषु लोकशिक्षाधिकारिभिः ।
लोहमार्गविभागस्य कालस्य गणनाप्रथा ॥ ५६ ॥

दिवा रात्रौ च होराणां गण्यते तैरनुक्रमः ।
चतुर्विंशतिसंख्याको न तु द्वादशके उभे ॥ ५७ ॥

समयो ह्येक एवायं गोपालेन सहाभवत् ।
वार्तालापोऽल्पबुद्धेर्मे श्रेष्ठप्रज्ञावतायुषि ॥ ५८ ॥

बालकैः शिक्षकैः शिष्यैरुच्चैश्च जयवादिभिः ।
प्रतस्थे रङ्गनाथस्य गृहं सत्कारितोऽतिथिः ॥ ५९ ॥

नाटके वङ्गभङ्गस्य पूर्वग्रन्थेषु वर्णिताः ।
कथाः कर्झनकृत्यानां पूर्वरङ्ग इव स्थिताः ॥ ६० ॥

भारतस्य प्रदेशेषु वङ्गोऽभूदतिविस्तृतः ।
सप्तकोट्यधिका लोका वङ्गभूवासिनस्तदा ॥ ६१ ॥

विस्तरेण च लोकानां संख्यया सोऽतिवर्तते ।
योग्यशासनसामर्थ्यमेकस्यैवाधिकारिणः ॥ ६२ ॥

कर्झनश्चिन्तयामास दीर्घकालं विभाजनम् ।
स्वप्रशासनपर्यन्तं न स निर्णयमाययौ ॥ ६३ ॥

कल्पिता योजना तेन वङ्गभङ्गस्य या पुरा ।
प्रेषिता सार्वभौमस्य संमत्यै लंदनं प्रति ॥ ६४ ॥

विषयस्यास्य चर्चायै जन्मभूमिं स्वयं गतः ।
षाण्मासिकं स वै कालमाङ्ग्लभूम्यामुवास ह ॥ ६५ ॥

चर्चिता योजना तेन श्रेष्ठमन्त्रिजनैः सह ।
तत्कृतानां सूचनानां मननं कर्झनोऽकरोत् ॥ ६६ ॥

अन्तिमे मासि वर्षस्य कर्झनः पुनरागतः ।
ततो मासत्रयात् पूर्वमकरोद् नवयोजनाम् ॥ ६७ ॥

उद्घोषिता सार्वभौमसंमतिर्योजनां प्रति ।
षष्ठे जूनाभिधे मासि विद्युत्पातभयंकरः ॥ ६८ ॥

घोषणायां तिथिश्चापि वङ्गभङ्गस्य निश्चिता ।
षोडशी दशमे मासे ख्रिस्तपश्चाङ्कदर्शिते ॥ ६९ ॥

श्रुत्वा तां घोषणां घोरां वङ्गैक्यस्य विघातिनीम् ।
वङ्गो व्याघ्रस्तदा क्रुद्ध उग्रः शस्त्रहतो वने ॥ ७० ॥

जगर्जोच्चैर्वङ्गनेता भङ्गादेशस्तु दुःसहः ।
कर्झनस्य प्रेरणया चाङ्ग्लभूपप्रवर्तितः ॥ ७१ ॥

वङ्गं न वयं रक्षयिष्यामो शृण्वन्त्वित्याङ्ग्लशासकाः ।
अपि प्राणार्पणं कृत्वा वयं वङ्गनिवासिनः ॥ ७२ ॥

निःशब्दत्वात् कर्झनस्य निषेधानन्तरं किल ।
भङ्गसङ्कटनिर्मुक्तो वङ्गोऽभूदिति मेनिरे ॥ ७३ ॥

बकवृत्तेः कर्झनस्य केचिद् मौनेन वञ्चिताः ।
लालमोहनघोषादिनेतारो वङ्गवासिनः ॥ ७४ ॥

राष्ट्रीयायाः सभायाश्च मुम्बय्यामधिवेशनात् ।
वङ्गे षण्मासपर्यन्तं शान्तो जनमहार्णवः ॥ ७५ ॥

उद्विग्ना वार्तयादौ ते चुक्षुभुस्तदनन्तरम् ।
मनोभङ्गसमीरेण तत्क्रोधाग्निः समेधितः ॥ ७६ ॥

हिन्दुमुस्लिमभेदस्य वङ्गभङ्गप्रवर्तने ।
बीजस्यारोपणं कर्तुमभ्यैच्छन्नाङ्ग्लशासकाः ॥ ७७ ॥

पूर्वभागं पृथक् चक्रुरिस्लामस्यानुयायिनः ।
संख्यया बहुला यस्मिन् प्रदेशात् पश्चिमास्थितात् ॥ ७८ ॥

पूर्ववङ्गभुवो ढाका राजधानी विनिश्चिता ।
फुल्लरो मध्यदेशस्थ उपप्रान्तपतिः कृतः ॥ ७९ ॥

अस्ति भार्या ममैका या हिन्दुधर्मानुयायिनी ।
अन्या प्रियतरा मे च मोहंमदमतानुगा ॥ ८० ॥

उपप्रान्तपतिर्ढाकासभायां स्पष्टमब्रवीत् ।
साम्राज्यमदमत्तोऽसौ भेदनीतिपटुः कुधीः ॥ ८१ ॥

वङ्गभङ्गदिने सर्वे स्नाता भागीरथीजले ।
प्रणेमुर्मन्दिरे कालीं महिषासुरमर्दिनीम् ॥ ८२ ॥

उत्तमां जगृहुर्दीक्षां गृहीत्वा जलमञ्जलौ ।
स्वदेशीति प्रसिद्धस्य व्रतस्योच्चारपूर्वकम् ॥ ८३ ॥

करेषु बन्धयाञ्चक्रुः रक्षासूत्रं धृतव्रताः ।
अन्योन्यप्रेमवृद्ध्यर्थं तद्दिने वङ्गबान्धवाः ॥ ८४ ॥

वङ्गभङ्गनिषेधाय शतशोऽथ सहस्रशः ।
सायं संमिलिता लोकाः सभास्थाने नियोजिते ॥ ८५ ॥

रुग्णशय्यां परित्यज्य बोस आनन्दमोहनः ।
अध्यक्षस्य पदं तत्र ह्यलंकर्तुं समागतः ॥ ८६ ॥

पालो बिपिनचन्द्रश्च सुरेन्द्रो वङ्गकेसरी ।
लालमोहनघोषश्च वक्तारोऽन्येऽप्युपस्थिताः ॥ ८७ ॥

ऊचुः सर्वे महाभागाः सभायां समुपस्थितान् ।
समुत्पन्नेयमापत्तिः कर्झनस्य दुराग्रहात् ॥ ८८ ॥

हिन्दुमुस्लिमयोर्मध्ये कलहाग्निं समेधितुम् ।
योजना वङ्गभङ्गस्य दुष्टबुद्ध्या प्रवर्तिता ॥ ८९ ॥

कटिबद्धा निराकर्तुं सङ्कटं तेन निर्मितम् ।
भवन्तु वङ्गदेशस्था हिन्दवो मुस्लिमास्तथा ॥ ९० ॥

न हि शब्दविरोधेन विपदेषा निरस्यते ।
दुष्टाज्ञाप्रतिकाराय बहिष्कारावलम्बनम् ॥ ९१ ॥

कर्तव्य आङ्ग्लवस्तूनां स्वदेशीव्रतचारिभिः ।
आबालवृद्धवङ्गीयैस्त्यागः संकल्पपूर्वकः ॥ ९२ ॥

उच्चैरुद्धृत्य हस्तेन रक्षासूत्रं सभापतिः ।
कम्पितेन स्वरेणाह मेघगम्भीरया गिरा ॥ ९३ ॥

बद्धः सूत्रेण वङ्गोऽयं पिशुनेन विभाजितः ।
वङ्गैक्याय यतिष्यामो वङ्गभूमिसुता वयम् ॥ ९४ ॥

विलुप्ता वङ्गभूशान्तिः कराला क्रान्तिकारिणी ।
सायुधाष्टभुजा देवी वङ्गानां वरदायिनी ॥ ९५ ॥

वङ्गस्यायातु संयोक्तुं शकले द्वे पृथक्कृते ।
जरासन्धं हि निर्मातुं जरा चक्रे यथा पुरा ॥ ९६ ॥

सभास्थानाद् गताः केचित् कालिकामन्दिरं प्रति ।
प्राश्य कालीपादतीर्थं प्रतिज्ञां तत्र चक्रिरे ॥ ९७ ॥

वङ्गाङ्ग्लप्रेमसंबन्धो वङ्गभङ्गेन नाशितः ।
तयोर्मध्ये समुत्पन्नः शत्रुभावोऽतिभीषणः ॥ ९८ ॥

चिकीर्षुर्हानिमाङ्ग्लानां यतिष्येऽहं च तत्कृते ।
बहिष्कारप्रयोगेण स्वदेशीव्रतमाचरन् ॥ ९९ ॥

स्त्रीपुमांसो बालवृद्धा वङ्गभङ्गापमानिताः ।
प्रतिग्रामं संमिलिताः पूर्वपश्चिमवङ्गयोः ॥ १०० ॥

नादो भङ्गनिषेधस्य सप्तकोटिमुखोत्थितः ।
भूमिं व्याप्य जगामोर्ध्वं नभोमण्डलमुन्नतम् ॥ १०१ ॥

वङ्गभङ्गप्रसङ्गेऽस्मिन् वङ्गवागुपयोजिता ।
व्याख्यानाय सुरेन्द्रेण प्रथमं च निजायुषि ॥ १०२ ॥

अद्य ज्ञातं मया तस्याः सामर्थ्यं सौष्ठवं तथा ।
वैपुल्यं चेति सानन्दमब्रवीद् वङ्गकेसरी ॥ १०३ ॥

वटोदरं परित्यज्य कलकत्तां समाययौ ।
अरविन्दो महायोगी दिव्यशक्तिप्रचोदितः ॥ १०४ ॥

स्वातन्त्र्यक्रान्तिपुष्ट्यर्थमारेभे नवदैनिकम् ।
विख्यातं भारते सर्वे 'वन्दे मातर'मुत्तमम् ॥ १०५ ॥

राष्ट्रसंसत् संमिलिता वङ्गभङ्गादनन्तरम् ।
आसीद् वै गोखले श्रेष्ठो वाराणस्यां सभापतिः ॥ १०६ ॥

पूर्वग्रन्थे वर्णिता सा सभा संक्षेपतो मया ।
वङ्गभङ्गोद्भवं वादं कथयामि सविस्तरम् ॥ १०७ ॥

सभापतिर्वङ्गभङ्गं न्यषेधीत् तीव्रभाषया।
कर्झनं तोलयामासावरंगाख्यनृपेण सः ॥ १०८ ॥

द्वयोः प्रस्तावयोश्चर्चा जाता विषयसंसदि।
वङ्गभङ्गोद्भवक्षोभदर्शनाय विशेषतः ॥ १०९ ॥

एकेनाङ्ग्लीयवस्तूनां बहिष्कारः समर्थितः।
अन्येन राजपुत्रस्य स्वागतस्य तथैव च ॥ ११० ॥

पुरस्कृतौ च प्रस्तावौ लालाजितिलकादिभिः।
न संमतो सुरेन्द्रादिनेमस्तपथगामिनाम् ॥ १११ ॥

अध्यक्षेण स्वागतस्य राजपुत्रो निमन्त्रितः।
सभास्थानमलंकर्तुं यातव्यं श्रीयुतैरिति ॥ ११२ ॥

तत्स्वागतविरोधेन जाता विषयसंसदि।
दयनीया गतिस्तेषां राजानुग्रहकाङ्क्षिणाम् ॥ ११३ ॥

विपद्ग्रस्तो जनो नैव स्वागतं कर्तुमिच्छति।
आप्तानामपि सर्वत्र रीतिर्जगति वर्तते ॥ ११४ ॥

भारतेऽद्य जनाः सर्वे वङ्गभङ्गेन दुःखिताः।
युवराजस्वागताय न ते सन्ति समुत्सुकाः ॥ ११५ ॥

जनानां दुःखितानां तां निराकर्तुं मनोव्यथाम्।
राष्ट्रसंसत्सदस्यानां निर्णयः साधनं भवेत् ॥ ११६ ॥

सदस्यैश्च सभास्थाने तत्सत्कारबहिष्कृतेः।
दातव्यानुमतिः स्पष्टैः शब्दैर्निश्चयदर्शिभिः ॥ ११७ ॥

लालाजिना युक्तिवादः कृतो विषयसंसदि।
चक्रे समर्थनं तस्य तिलकोऽपि स्वभाषणे ॥ ११८ ॥

समितेश्च सदस्यानां सूचना सा च संमता।
पुरस्करोम्यहं तां तु निर्णयायाधिवेशने ॥ ११९ ॥

लालाजेस्तद् वचः श्रुत्वा चिन्ताग्रस्तः सभापतिः ।
कर्तुं पराङ्मुखं येते धीरं स्वकृतनिश्चयात् ॥ १२० ॥

युवराजस्वागतार्थप्रस्तावस्याधिवेशने ।
जहौ विरोधं लालाजिरध्यक्षवचसस्तदा ॥ १२१ ॥

सुरेन्द्रेण बहिष्कारप्रस्तावः स्वीकृतो यदा ।
आश्वासनाय लालाजेस्तिलकः संमतिं ददौ ॥ १२२ ॥

लालाजितिलकौ तस्मिन् सभाया अधिवेशने ।
तत्प्रस्तावप्रसङ्गे तौ मण्डपे नोपतस्थतुः ॥ १२३ ॥

एधितो रंहसा वायोर्दावाग्निरिव कानने ।
भङ्गक्षोभानलो देशे वङ्गानां वै व्यवर्धत ॥ १२४ ॥

आसीद् मुख्यः शासनस्य पूर्ववङ्गस्य फुल्लरः ।
साम्राज्यमदिरामोहभ्रंशितो न्यायसत्पथात् ॥ १२५ ॥

पुरो लोकसहस्राणामुन्मत्तो योऽब्रवीत् तदा ।
द्विभार्योऽहं प्रेयसी मे यवनीति गतत्रपः ॥ १२६ ॥

बारीसाले कृतस्तेन समारोहनिरोधनम् ।
चारा नियोजिता गुप्ता गुरुच्छात्रान् निरीक्षितुम् ॥ १२७ ॥

स्वातन्त्र्यप्रियनेतारस्तत्रत्या ये च निर्भयाः ।
तदादेशनिषेधाय चक्रुरान्दोलनं महत् ॥ १२८ ॥

तत्रैव वङ्गनेतार एप्रिले प्रान्तसंसदः ।
वङ्गभङ्गविचाराय निश्चिक्युरधिवेशनम् ॥ १२९ ॥

माहंमदो रसूलोऽसौ सभाध्यक्षो नियोजितः ।
प्रस्थिता मण्डपं गन्तुं सभाध्यक्षपुरःसराः ॥ १३० ॥

सुरेन्द्रनाथमुख्याश्च वङ्गप्रान्तेभ्य आगताः ।
तेजस्विनः प्रदीप्ताश्च ज्वलदग्निशिखोपमाः ॥ १३१ ॥

वन्दे मातरमित्येतं घोषं चक्रुर्यदा जनाः ।
तदा सुरेन्द्रमागत्य रुरोध स्वास्थ्यरक्षकः ॥ १३२ ॥

तस्यापराधदण्डार्थं नीतो न्यायालयं प्रति ।
ददातु दण्डं द्विशतमपराधीति निर्णयम् ॥ १३३ ॥

न्यायसिंहासनासीनो ददौ, तेनातिविस्मितः ।
उवाच क्षुब्धचित्तश्च सुरेन्द्रो न्यायपूरुषम् ॥ १३४ ॥

दुष्टोऽहमिति मां मत्वा न्यायाधीशस्य वर्तनम् ।
जातं तद् नोचितं मन्ये न्यायकार्याधिकारिणः ॥ १३५ ॥

तस्मै चुक्रोध पीठस्थो न्यायाधीशोऽतिगर्वितः ।
चक्रे द्विगुणितं दण्डमपमानस्य कारणात् ॥ १३६ ॥

अधिकारिव्यत्ययेन सर्वे लोकाः समुत्सुकाः ।
बभूवुः प्रतिकाराय मार्गेण स्वावलम्बिना ॥ १३७ ॥

तदा परिषदः स्थानं जयघोषैर्निनादितम् ।
वन्दे मातरमित्याहुरुच्चैस्तत्र सभासदः ॥ १३८ ॥

परिषद्ध्वंसनार्थं वै प्रेषिताः स्वास्थ्यरक्षकाः ।
ताडनाय सभास्थाने काण्डेनापि सभासदाम् ॥ १३९ ॥

लोका गता अतिक्षुब्धाः परिषन्मण्डपाद् बहिः ।
पूज्योऽश्विनीकुमारस्तु निर्भयस्तत्र वै स्थितः ॥ १४० ॥

वैफल्यं वैधमार्गस्य दृष्टं सर्वजनैर्यदा ।
तदैव क्रान्तिमार्गस्य जातोत्पत्तिर्भयावहा ॥ १४१ ॥

सुरेन्द्रेण निजग्रन्थे मतमेवं प्रदर्शितम् ।
अनाचारात् फुल्लरस्य रक्तात्याचारसंभवः ॥ १४२ ॥

दुष्कृत्यं बारिसाले यत् कृतं वङ्गाधिकारिभिः ।
वर्णितं तद् विनोदेन श्रीखापर्डेमहोदयैः ॥ १४३ ॥

दर्शनादेव दैन्यस्य दूयता हृदयेन यः ।
ददाति वै समाधानं यथाशक्ति स सात्त्विकः ॥ १४४ ॥

विज्ञापितो याचकेन तस्मै किंचिद् ददाति यः ।
मनसा नातितुष्टेन दातासौ राजसः स्मृतः ॥ १४५ ॥

गालिदानं याचकाय कृत्वा भिक्षां प्रयच्छति ।
स्वेच्छाचारी विकल्पेन दातायं तामसः स्मृतः ॥ १४६ ॥

स्तब्धोऽदत्त्वा याचकाय चतुर्थश्च नराधमः ।
अपहर्तुं याचकस्य भिक्षापात्रं प्रवर्तते ॥ १४७ ॥

न सभा ध्वंसिता तेन भिक्षापात्रमपाहृतम् ।
महासभासदस्यानां वङ्गराज्याधिकारिणा ॥ १४८ ॥

हेया तस्माद् राजकार्यधुरीणैर्देशसेवकैः ।
स्वावलम्बनमाश्रित्य भिक्षावृत्तिरतः परम् ॥ १४९ ॥

सुरेन्द्रस्यापमानेन बारिसालेऽधिकारिभिः ।
कृतेन वङ्गदेशस्य क्षोभस्तीव्रतमोऽभवत् ॥ १५० ॥

धिक्कारितो वृत्तपत्रैर्निखिलैर्भारतेऽखिले ।
फुल्लरः पूर्ववङ्गस्य क्षत्रपो निरपत्रपः ॥ १५१ ॥

सुरेन्द्रस्यापमानेन भारतो ह्यपमानितः ।
कर्तव्या तच्च्युतिः स्थानात् सार्वभौमाधिकारिभिः ॥ १५२ ॥

बिन्दवस्तप्ततैलस्य प्रसरन्ति यथा जले ।
भारते प्रसृता नेतुरपमानोष्णबिन्दवः ॥ १५३ ॥

न प्रार्थना न विज्ञप्तिर्भैक्ष्यं नैव च नैव च ।
पराक्रमेण सिद्ध्यन्ति स्वातन्त्र्यस्य मनोरथाः ॥ १५४ ॥

मराठा-केसरीपत्रे महाराष्ट्रे जगर्जतुः ।
पूरिता ध्वनिना तेन विन्ध्यसह्याद्रिकन्दराः ॥ १५५ ॥

अजिंठासप्तपूटाद्रिमहेन्द्रनगराजयः ।
लालातिलकपालानां संदेशेन निनादिताः ॥ १५६ ॥

तिलकोक्त्यनुवादार्थं माधवो ' हिन्दकेसरी 'म् ।
प्रारेभे फणिपुर्यां वै ' सप्रे ' इत्युपनामकः ॥ १५७ ॥

देशसेवकपत्रस्य संपादकतया तदा ।
धुरं वोढुं समायातो वीरः कोल्हट्करोऽच्युतः ॥ १५८ ॥

' वृत्तपत्रं ' यवत्माळे पृथ्वीगीरेण चालितम् ।
बभूव मुखपत्रं तद् विदर्भाणां जनप्रियम् ॥ १५९ ॥

आन्ध्रेषु ववृधे श्रद्धा मार्गे तिलकदर्शिते ।
प्रशासनविरोधाय स्वातन्त्र्यप्रतिपत्तये ॥ १६० ॥

गङ्गाधरप्रयत्नेन प्रतिकारस्य तत्परः ।
कर्णाटकस्तदा जातस्तिलकस्य मतानुगः ॥ १६१ ॥

काळ-भाला-विहार्यादिवृत्तपत्रेषु घोषणा ।
अखण्डिता महाराष्ट्रे स्वातन्त्र्यध्येयवादिनी ॥ १६२ ॥

वङ्गभङ्गनिमित्तेन चैतन्यं यत् समुत्थितम् ।
स्वराज्यप्राप्तये तस्य विनियोगः प्रशस्यते ॥ १६३ ॥

युगान्तरादिपत्रेषु लेखकैः प्रतिपादितम् ।
कर्तव्यस्तिलको नेता स्वातन्त्र्यान्दोलनस्य वै ॥ १६४ ॥

कलकत्तापुरे कार्यः शिवराजमहोत्सवः ।
एषा देउस्करकृता सूचना सर्वसंमता ॥ १६५ ॥

ददुर्निमन्त्रणं सर्वे तिलकाय महोत्सवे ।
व्याख्यानाय समागन्तुं तदानीं विधिपूर्वकम् ॥ १६६ ॥

वङ्गदेशमहाराष्ट्रस्नेहसंबन्धवर्धनम् ।
स्वीचक्रे तिलकस्तच्च धन्यवादादिपूर्वकम् ॥ १६७ ॥

दिनाङ्के जूनमासस्य द्वितीये तिलकोऽगमत् ।
मुम्बईस्थानकाद् वह्निवाहनेन सुहृद्वृतः ॥ १६८ ॥

प्रमुखास्तेषु खापर्डे विदर्भजननायकः ।
वामनोऽसौ प्राच्यविद्यापारगो विदुषां वरः ॥ १६९ ॥

मुंजे तिलकमार्गीयो दीपस्तम्भ इव स्थितः ।
फणिपुर्यां मध्यदेशनेता हिन्दीजनप्रियः ॥ १७० ॥

मित्रत्रयेण तिलकः शुशुभे परिवेष्टितः ।
अग्निकुण्डैस्त्रिभिर्दीप्तैर्यज्ञागारे यथाध्वरः ॥ १७१ ॥

सशास्त्रप्रणवोच्चारो यथा व्याहृतिभिस्त्रिभिः ।
प्रयागतीर्थराजो वा प्रवाहैः पावनैस्त्रिभिः ॥ १७२ ॥

चतुर्थे दिवसे प्रातः संप्रापुर्हावडास्थलम् ।
कालिकानगरद्वारं गङ्गोत्तरतटस्थितम् ॥ १७३ ॥

अनेके वङ्गदेशस्थाः स्थानकं समुपस्थिताः ।
महाराष्ट्रधुरीणानां स्वागताय समुत्सुकाः ॥ १७४ ॥

विशालः समुदायोऽसौ महार्णव इव स्थितः ।
जयशब्दमुवाचोच्चैर्दृष्ट्वा तिलकमागतम् ॥ १७५ ॥

नेतारः सर्वपक्षाणां संप्राप्ताः स्थानकं तदा ।
समर्पयन् पुष्पमाला नेतारश्चेतरे जनाः ॥ १७६ ॥

जाताकाशात् पुष्पवृष्टिर्नयनानन्ददायिनी ।
भूमिराच्छादिता सर्वा सुमनोभिः सुशोभनैः ॥ १७७ ॥

प्रसारितेव भूपृष्ठे महार्हौर्णसुखासनी ।
विचित्रवर्णपुष्पाणामालेखैश्च सुशोभिनी ॥ १७८ ॥

तिलको वाहनारूढो जनताब्धेः समुत्थितः ।
पूर्वाब्धेरुत्थितः प्रातो बालार्कः शुशुभे यथा ॥ १७९ ॥

तदैव वामनादित्रिसुहृदस्तद्रथस्थिताः ।
स्वभासमा विरेजुस्ते बुधशुक्रगुरूपमाः ॥ १८० ॥

समारोहेण ते पौराः पथिभिः सुष्ठ्वलंकृतैः ।
प्रमुखैस्तद्रथं निन्युः पताकाध्वजतोरणैः ॥ १८१ ॥

युवकैर्वाहितं कालीनगरीजनसंकुलैः ।
घोषेण वाद्यगीतानां मङ्गलानां निनादितैः ॥ १८२ ॥

निवासं तिलको गत्वा विश्रान्तिमनुभूय च ।
सायमुद्घाटयामास देश्यवस्तुप्रदर्शनम् ॥ १८३ ॥

शिवोत्सवसभा जाता महती भौमवासरे ।
दत्तोऽश्विनीकुमारोऽसौ तदध्यक्षपदे स्थितः ॥ १८४ ॥

चक्रवर्ती जगौ गीतं शिवाजीगुणवर्णनम् ।
रचितं कविसम्राजा रवीन्द्रेण महात्मना ॥ १८५ ॥

मोतीलालेन घोषेण प्रेषितं भाषणं निजम् ।
चौधरिर्वाचयामास मेघगम्भीरया गिरा ॥ १८६ ॥

तिलकेनाङ्ग्लभाषायां महत्त्वं शिवभूपतेः ।
सर्वभारतलोकेभ्यो यद्वै तत्प्रतिपादितम् ॥ १८७ ॥

श्रीभवानीप्रसादेन 'भवानी' मत्करस्थिता ।
भवेद् विजयिनी नित्यं श्रद्धासीच्च शिवभूपतेः ॥ १८८ ॥

आसीद् भवानी मत्स्फूर्तिः प्रेरणा साहसस्य च ।
समादिष्टो जगद्धात्र्या प्रापयिष्ये स्वतन्त्रताम् ॥ १८९ ॥

दास्याद् विमोचनं जन्मभूमेर्मे जन्मनो व्रतम् ।
उद्घोषिता प्रतिज्ञैषा भवानीमन्दिरे स्वयम् ॥ १९० ॥

आधाय पादयोर्हस्तं शैशवे वयसि स्थिते ।
पराक्रमेण धैर्येण प्रज्ञया प्राप्तवान् यशः ॥ १९१ ॥

संस्थापने स्वराज्यस्य सुराज्यस्यापि भूपतिः ।
कृतार्थाय नमस्तस्मै स्वातन्त्र्यस्य प्रदायिने ।। १९२ ।।

कालीभक्ताः सुप्रसन्ना कालिकत्तानिवासिनः ।
निर्देशेन प्रभावस्य काल्यास्तिलकभाषणे ।। १९३ ।।

अपश्यत् तिलकः षष्ठे दिनाङ्के युवकैः कृतम् ।
क्रीडाप्रदर्शनं स्थाने शिवभूपोत्सवस्य च ।। १९४ ।।

समेता युवकास्तत्र गणवेषविभूषिताः ।
नानारङ्गास्तु वेषाणां संघवैशिष्ट्यदर्शकाः ।। १९५ ।।

यूनां संस्थापिताः संघाः वङ्गभङ्गविरोधिनाम् ।
लियाकतहुसेनेन चक्रवर्त्यादिभिस्तथा ।। १९६ ।।

तिलको युवकोत्साहं वङ्गैक्यार्थं समुत्थितम् ।
दृष्ट्वा मेने स्वराज्यस्य सुप्रभातमिदं तदा ।। १९७ ।।

सत्कारार्थं च बालस्य तस्य मित्रत्रयस्य च ।
सुरेन्द्रप्रमुखैर्ज्येष्ठैर्वङ्गभूश्रेष्ठनेतृभिः ।। १९८ ।।

कृतोऽपूर्वः समारम्भः कालिकत्तापुरे विराट् ।
सभां तिलक आनीतः समारोहेण वै तदा ।। १९९ ।।

आलिङ्गितः सुरेन्द्रेण सभास्थाने सुशोभिते ।
सभासद्भिर्वन्दितश्च जयशब्दैरुदीरितैः ।। २०० ।।

सुरेन्द्रः प्रार्थयामास ह्यलंकर्तुं महासनम् ।
गृहीत्वा पाणिना पाणिं नीत्वा च तिलकं स्वयम् ।। २०१ ।।

वामनो बालकृष्णश्च सोत्थापनसमाहृतौ ।
अधिष्ठितावासने तौ तदर्थं पूर्वरक्षिते ।। २०२ ।।

उच्चासनसमासीनः सदस्यैरभिवन्दितः ।
खापर्डे शुशुभे तत्र बृहस्पतिरिवाम्बरे ।। २०३ ।।

मोतीलालः पालबाबुर्बानर्जिर्वङ्गकेसरी ।
प्राशंसन् तैलकं कार्यं वाग्मी च श्यामसुन्दरः ॥ २०४ ॥

तिलकोऽकथयद् बन्धून् वङ्गदेशनिवासिनः ।
भारतीया जनाः सर्वे वङ्गदुखेन दुःखिताः ॥ २०५ ॥

राष्ट्रैक्यस्य परीक्षायै कालोऽयं समुपस्थितः ।
ऐक्यं भारतवर्षस्य वङ्गभङ्गेन दर्शितम् ॥ २०६ ॥

नवपक्षस्य तत्त्वानां चकारोच्चारणं च सः ।
राष्ट्रं समुद्धरेद् दास्याद् बलेनैवात्मनो जनः ॥ २०७ ॥

यज्ञान्तेऽवभृथस्नानं यथा कुर्वन्ति याज्ञिकाः ।
छत्रपत्युत्सवस्यान्ते गङ्गास्नानविधिं तथा ॥ २०८ ॥

राजधान्यां नागरिकाश्चक्रुश्चोत्सवचालकाः ।
समारोहेण महता गीतवादनपूर्वकम् ॥ २०९ ॥

स्नात्वा गङ्गोदके पूते वासांसि परिधाय च ।
खापर्डे तिलको मुंजे वामनश्च सभास्थलम् ॥ २१० ॥

गङ्गातीरे गता यत्र दत्तोऽध्यक्षपदे स्थितः ।
बारिसालस्य विख्यातो नेताश्विनिकुमारकः ॥ २११ ॥

लोककल्याणमुद्दिश्य द्रव्यादित्यागपूर्वकम् ।
अर्चनं देवतानां यद् विधिवद् यज्ञ उच्यते ॥ २१२ ॥

निरपेक्षा लोकसेवा तत्त्वतो यज्ञरूपिणी ।
महत्त्वं यज्ञधर्मस्य तिलकेन विवेचितम् ॥ २१३ ॥

खापर्डे वर्णयामास स्वदेशीव्रतगौरवम् ।
बहिष्कारप्रभावं च मुंजे तावन्वमोदत ॥ २१४ ॥

कृत्वा चर्चां मुख्यमित्रैः सह सप्तदिनावधि ।
रूपं स्वपक्षकार्यस्य तिलकेन विनिश्चितम् ॥ २१५ ॥

कथं राष्ट्रसभायाश्च कालिकत्ताधिवेशने ।
प्राप्तव्या संमतिः पक्षकार्याय च सभासदाम् ॥ २१६ ॥

इति तेषां च सर्वेषां चर्चाया विषयोऽभवत् ।
अध्यक्षस्यानुकूल्यं चेद् यशःप्राप्तिर्न दुष्करा ॥ २१७ ॥

इति तेषां मतं जातं नेतॄणां वङ्गवासिनाम् ।
तदर्थं कृतसंकल्पा नवपक्षाभिमानिनः ॥ २१८ ॥

एकोद्देशेन संयुक्ता भारतस्य हिताय ते ।
मध्यदेशमहाराष्ट्रजना वङ्गजनैः सह ॥ २१९ ॥

तिलको मित्रवर्गश्च कृत्वैक्यस्य विनिर्मितिम् ।
राजधानीं भारतस्य त्यक्त्वा नागपुरीं ययुः ॥ २२० ॥

नेतारो न्यवसन् सर्वे महाजनगृहे तदा ।
अधिवक्तुर्बलवतः पूजितस्याखिलैर्जनैः ॥ २२१ ॥

सायं नाट्यगृहे श्रोतुं पौरास्तिलकभाषणम् ।
उपस्थिता भिन्नधर्मजातिवर्णाः समुत्सुकाः ॥ २२२ ॥

तिलको वर्णयामास शोचनीयां जनस्थितिम् ।
दुःखदारिद्र्यभूयिष्ठां भीषणव्याधिजर्जराम् ॥ २२३ ॥

दैन्यदारिद्र्यमुत्पन्नं संततद्रव्यशोषणात् ।
शासनं परकीयाणां मुख्यं तस्यास्ति कारणम् ॥ २२४ ॥

आङ्ग्लानां शासनं यद्वदाङ्ग्ललोकहितैकदृक् ।
भूयाच्च भारतस्तद्वद् भारतीयहितैकदृक् ॥ २२५ ॥

समाचरेद् भारतीयः स्वदेशीव्रतमुत्तमम् ।
राष्ट्रभाग्योदयार्थं वै बहिष्कारसमन्वितम् ॥ २२६ ॥

द्विविधं वर्ण्यते शास्त्रे रूपं देवस्य सर्वदा ।
एकं घोरवपुश्चासीदन्यच्च शान्तवपुस्तथा ॥ २२७ ॥

घोररूपं बहिष्कारयोगोत्थमाङ्गलदुःखदम् ।
शान्तरूपं देशभक्तेः स्वदेशीव्रतपालनम् ॥ २२८ ॥

सामान्यवस्तुलाभोऽपि न तु त्यागं विना भवेत् ।
न विनात्मार्पणं कश्चित्स्वातन्त्र्यमधिगच्छति ॥ २२९ ॥

वणिग्विद्यार्थिनां तेन बहिष्कारसमर्थनम् ।
सभयोर्न्यायमीमांसातत्त्वरीत्या कृतं तदा ॥ २३० ॥

वचनं शास्त्रकारस्य रतिः कार्या स्वयोषिति ।
तेनैव शास्त्रवाक्येन निषिद्धा परयोषिति ॥ २३१ ॥

संचारिता नागपूरजनचित्तेषु चेतना ।
प्रसारे नवकार्यस्य तिलकस्य च भाषणैः ॥ २३२ ॥

खापर्डेऽसौ नागपूरादगच्छदमरावतीम् ।
मुम्बई लोहमार्गेण तिलकश्च सवामनः ॥ २३३ ॥

मुंजे च स्थानकं गत्वा बहुभिः पुरवासिभिः ।
तिलकं पूजयामास पुष्पमालाः समर्पयन् ॥ २३४ ॥

नवपक्षस्थापनार्थं मुंजे स्वानुगसंयुतः ।
मध्यप्रदेशभागेषु प्रतिज्ञामकरोत् तदा ॥ २३५ ॥

पत्रं लिलेख राष्ट्रस्य खापर्डेऽसावनावृतम् ।
सभाध्वर्यून् समुद्दिश्य नवमार्गसमर्थकम् ॥ २३६ ॥

प्रशंसितो नवः पन्थाः भिक्षामार्गो विनिन्दितः ।
महासभाधुरीणत्वे लालाजेर्नाम सूचितम् ॥ २३७ ॥

पत्रं कृष्णस्वामिभिश्च स्वयंस्फूर्त्या प्रकाशितम् ।
खापर्डेपत्रसंवादिविचारैश्च परिप्लुतम् ॥ २३८ ॥

तिलकः केसरीपत्रे खापर्डेसूचनां प्रति ।
संमतिं दर्शयामास कृत्वा तस्य समर्थनम् ॥ २३९ ॥

नूतनानां विचाराणां प्रसाराय महोद्यमम् ।
आरेभिरे महाराष्ट्रे तिलकस्यानुयायिनः ॥ २४० ॥

स्थानं त्यक्त्वा कर्झनो मानभङ्गात्
संतप्ताङ्गः प्रस्थितो जन्मभूमिम् ।
स्थानाद् भ्रष्टो फुल्लरोऽभूद् दुरात्मा
ढाकाधीशः सार्वभौमप्रकोपात् ॥ २४१ ॥

सम्राजः प्रतिराजपूरुष इति स्थाने स्थितः कर्झन
आङ्ग्लानां च निजप्रशासनविधेः साम्राज्यवर्धिष्णुना ।
उप्तं हिन्दजनस्य तेन हृदये द्वेषस्य बीजं च यत्
कल्याणाङ्कुर एव तद् भरतभूभाग्योदयस्याभवत् ॥ २४२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे वङ्गभङ्गोपपर्वणि
श्रीछत्रपतिशिवाजिमहोत्सवाख्यस्त्रयस्त्रिंशस्तरङ्गः ।

## चतुस्त्रिंशस्तरङ्गः

वङ्गभङ्गेन संतप्ता आङ्ग्लराज्यविरोधिनः ।
तरुणा मेनिरे दास्यं दुःसहं निरयोपमम् ॥ १ ॥

युवस्वाभाविकोत्साहप्रेरिताः स्थविरा अपि ।
स्वराज्याभिमुखं कर्तुं लोकं वङ्गेषु येतिरे ॥ २ ॥

सुरेन्द्रनाथ एकस्मिन् स्वव्याख्याने विशेषतः ।
प्रत्यूहं दर्शयामास परशासनसंभवम् ॥ ३ ॥

स्वधर्मस्य च राष्ट्रस्य प्राचीनायाश्च संस्कृतेः ।
महिमानं स्वराज्यस्य स्वदेशस्य हितप्रदम् ॥ ४ ॥

व्याख्यानान्ते जनैस्तस्य निहिताः सुमनःस्रजः ।
स्वस्तिवाचनकैर्मन्त्रैः शीर्षे वै साक्षतं तदा ॥ ५ ॥

अभिषिक्तो वेदमन्त्रैर्ब्राह्मणैर्वेदपाठकैः ।
गङ्गोदकेन शुद्धेन कुशाग्रैर्दर्भमुष्टिभिः ॥ ६ ॥

आचार्याणां गुरूणां च पूज्यानामर्चनाविधौ ।
कुसुमानां शिरोभूषामर्पयन्ति हि पूजकाः ॥ ७ ॥

सुरेन्द्रनाथपूजाया आङ्ग्लपत्रैः प्रकाशितम् ।
वृत्तं बुद्ध्या भ्रमोत्पत्त्यै ह्याङ्ग्लदेशनिवासिनाम् ॥ ८ ॥

राज्याभिषेकसंस्कारः सुरेन्द्रस्य कृतो जनैः ।
आङ्ग्लराज्योन्मूलनाय वङ्गीयैर्विधिपूर्वकम् ॥ ९ ॥

केचिदाहुर्वङ्गदेशे सैनिका युद्धतत्पराः ।
संख्याता एकलक्षार्धं स्वराज्यस्थापनोद्यताः ॥ १० ॥

ससैनिकः सुरेन्द्रोऽयं सङ्गराय समुत्थितः ।
नोपेक्षा तस्य कर्तव्या शासनस्याधिकारिभिः ॥ ११ ॥

खड्गेनैवार्जितं राज्यमस्माकं शूरपूर्वजैः ।
तत् खड्गस्य प्रभावेण समर्था रक्षितुं वयम् ॥ १२ ॥

एवं टाइम्सपत्रेण लंदने गर्जितं मुहुः ।
भारतस्य स्वजातीयलेखभ्रंशितबुद्धिना ॥ १३ ॥

तिलकः केसरीपत्रे तस्मै युक्तोत्तरं ददौ ।
न शौर्येण जितं राज्यं भारते ह्याङ्ग्लपूर्वजैः ॥ १४ ॥

विश्वासघातकापद्यधूर्ततासत्यपैशुनैः ।
अवकीर्णोऽसतां मार्ग आङ्ग्लनीतिविदामिह ॥ १५ ॥

क्लैवहेस्तिंग्जवेंटींकडलहौस्यादिशासकाः ।
राज्यविस्तारकार्यार्थे चक्रुः पापानि नित्यशः ॥ १६ ॥

शस्त्राण्येवोपयोक्ष्यन्ते वल्गनेति भवेद् वृथा ।
नैव स्वातन्त्र्यलिप्सूनां तया तेजो हि शाम्यति ॥ १७ ॥

सर्पोऽयमिति यद् रज्जोरारब्धं ताडनं वृथा ।
हास्यास्पदं विहातव्यं तत् कृत्वा स्वमतिं स्थिराम् ॥ १८ ॥

नवपक्षप्रचाराय संचारं तिलकोऽकरोत् ।
कर्णाटे च महाराष्ट्रे वङ्गक्षोभमवर्णयत् ॥ १९ ॥

यद् यज्जातं वङ्गदेशे तस्य वै स्वानुयायिनाम् ।
स्वपक्षस्य च तत्त्वानां ददौ ज्ञानं सविस्तरम् ॥ २० ॥

कृत्वासौ दर्शनं पुण्यं पंढरीशस्य मन्दिरे ।
तिलकः प्रार्थयामास भक्तांस्तत्र समागतान् ॥ २१ ॥

आराधनं विठ्ठलस्य महाराष्ट्रस्य वैभवम् ।
ज्ञानेशेन समारब्धं तुकारामेण वर्धितम् ॥ २२ ॥

मायां तितीर्षवः सर्वे संप्रदायानुयायिनः ।
कृपया सद्गुरूणां च नामसंकीर्तनेन च ॥ २३ ॥

मातृभूर्दलितास्माकमाङ्ग्लैः संप्रति वर्तते ।
यत्नस्तद्दुःखनाशाय कर्तव्यः सज्जनैः सदा ॥ २४ ॥

एकादश्या समेतं च स्वदेशीव्रतमाचरेत् ।
देवभक्तः समस्तस्य भारतस्य हिताय वै ॥ २५ ॥

तिलक उदितभक्तिर्वेदधर्मानुयायी
समचरणसरोजं चिन्तयन् पाण्डुरङ्गम् ।
प्रणतवरदमूर्तेर्वन्दितुं पादयुग्म-
मविशदघविनाशं मन्दिरं विठ्ठलस्य ॥ २६ ॥

नत्वा पादौ प्रार्थयामास देवं
बुद्धिं शक्तिं भारतीयप्रजायै ।
स्वोद्धारार्थं देहि देशस्य मुक्त्यै
यत्नं कर्तुं त्यागपूर्वं सुरेश ॥ २७ ॥

यत्नारूढो विन्दते सर्वसौख्यं
दैवाधीनो नीचतां याति लोके ।
बुद्धिर्यत्ने पौरुषस्याद्यचिह्नं
यत्नप्राप्त्या मानवस्य प्रतिष्ठा ॥ २८ ॥

मोहालस्यग्रस्तलोकाय यत्न-
शिक्षां दातुं नष्टलाभोत्सुकाय ।
भूम्यामासन् प्रायशस्तेऽवतारा
उद्धर्तुं वाज्ञानगर्तांद् मुमुक्षून् ॥ २९ ॥

अस्मिन् काले भारते दुर्दशा या
तन्नाशाय त्वत्प्रसादाच्चिकीर्षा ।
उत्पन्ना सा वर्धतां शीघ्रमेवं
विज्ञप्तिर्मे पादयोस्ते नतस्य ॥ ३० ॥

एवं स्तुत्वा पाण्डुरङ्गं दयालुं
पुण्यक्षेत्रात् प्रस्थितो लोकमान्यः ।
संचारार्थं बेळगावप्रदेशे
द्रष्टुं प्रेम्णा मित्रवर्गं निजं च ॥ ३१ ॥

गङ्गाधरादिमित्राणां निर्बन्धात् तिलको गतः ।
भाविकार्यविचाराय नवपक्षाभिवृद्धये ॥ ३२ ॥

गङ्गाधरादिभिर्मित्रैः पौरैरन्यैश्च पूजितः ।
लोकान् प्रशिक्षयन् सर्वान् दिनत्रयमुवास सः ॥ ३३ ॥

स्वदेशी चाङ्ग्लसाम्राज्यं प्रस्तुतं राजकारणम् ।
सभास्वतिविशालासु तिलकैश्चर्चितं त्रयम् ॥ ३४ ॥

अशृण्वन् बहवो लोका मन्त्रमुग्धा इव स्थिताः ।
व्याख्यानमेकचित्तेन तिलकस्य सभागताः ॥ ३५ ॥

न द्वेषादाङ्ग्ललोकानां स्वराज्याभिमुखा वयम् ।
अस्मद्भाग्यविधातार इच्छामो भवितुं स्वयम् ॥ ३६ ॥

तत्त्वच्युतो भवेद् विद्वान् तत्त्वज्ञोऽपि पदस्थितः ।
मोरले नापवादोऽस्ति नियमस्येति मे मतम् ॥ ३७ ॥

न प्रमाणैस्तर्कशुद्धैर्लोभोपहतचेतसाम् ।
राजसेवानुरक्तानां सुलभं परिवर्तनम् ॥ ३८ ॥

श्रवणेऽपि तिरस्कारः कर्झनेन प्रदर्शितः ।
कॉटनस्य निषेधेन दिदृक्षोस्तं सभापतेः ॥ ३९ ॥

आङ्ग्लराष्ट्रस्य वैशिष्ट्यं शिल्पोद्योगोपजीविका ।
तस्या हानिकरोपायः स्वीकर्तव्यो हि भारते ॥ ४० ॥

अरिहिंसां वर्जयित्वा यशःसाधनमद्भुतम् ।
बहिष्कारेण संयुक्तं स्वदेशीसेवनं दृढम् ॥ ४१ ॥

उपदिष्टा जना एवं तिलकेन समुत्सुकाः ।
कुर्महे भवदीयाज्ञामुच्चैराहुः सभागताः ॥ ४२ ॥

कालोदरे विलीनानि साम्राज्यानि यथा पुरा ।
तथैव वर्तमानानि भविष्यन्तीत्यसंशयम् ॥ ४३ ॥

न क्षमा रक्षितुं किंचिदर्गला कालवर्त्मनि ।
अन्यायोपार्जितं वस्तु सर्वं तत् क्षणभङ्गुरम् ॥ ४४ ॥

पुरतः पुरतो याति खण्डयन्नध्वनि स्थितम् ।
स्थावरं जङ्गमं चैव कालो दण्डधरोऽसिना ॥ ४५ ॥

साम्राज्यपरिरक्षार्थं चिकित्सा भाति मे वृथा ।
कर्झनेन कृता रोमसाम्राज्यान्तानुमानतः ॥ ४६ ॥

जन्मसिद्धाधिकारस्य विजयोऽन्ते न संशयः ।
प्रगतिं भारतीयानां निरोद्धुं कोऽपि न क्षमः ॥ ४७ ॥

भवेच्चेदीदृशी श्रद्धा लोके वृद्धिं गमिष्यति ।
अन्योन्यसहकार्यस्य प्रवृत्तिरपि सोज्ज्वला ॥ ४८ ॥

दत्वा मन्त्रं स्वराज्यस्य स्वदेशीव्रतपूर्वकम् ।
निर्ममे तिलकः शक्तिं बहिष्कारस्य चोत्तमाम् ॥ ४९ ॥

कार्यं समाप्य कर्णाटे तिलको गृहमागतः ।
चिन्तयामास पक्षस्य यशसे नवयोजनाम् ॥ ५० ॥

अलंकर्तुं पदं राष्ट्रसभाया अधिवेशने ।
सूचितं नाम लालाजेर्गणेशेन स्वपत्रके ॥ ५१ ॥

विपीनचन्द्रपालेन तिलकस्यैव तत्पदे ।
स्थितिर्योग्येति कालेऽस्मिन् विषये तेन घोषितम् ॥ ५२ ॥

मेथाप्रभृतिनेमस्तसंघस्यानुमतेन वै ।
कर्तव्यश्चालकैर्मुख्यैरध्यक्षपदनिर्णयः ॥ ५३ ॥

आङ्ग्लहिन्दैः पत्रकारैरेवं कोलाहलः कृतः ।
वङ्गे नेमस्तपत्राणि चक्रुस्तस्यानुमोदनम् ॥ ५४ ॥

चर्चायां विषयस्यास्य मतभेदप्रदर्शनम् ।
गतं नीचतमां कोटिमनादृत्यापि सभ्यताम् ॥ ५५ ॥

वङ्गनेमस्तपक्षस्य शोचनीया दशाभवत् ।
शिशिरे जीर्णपत्राणामनिलस्येव रंहसा ॥ ५६ ॥

अध्यक्षस्तिलको योग्यो युवाह समरोत्सुकः ।
नोपयोज्याः प्रसङ्गेऽस्मिन् नेतारः क्षीणबुद्धयः ॥ ५७ ॥

अरविन्दः पालबाबुः प्रभावी श्यामसुन्दरः ।
जितेन्द्रो व्योमकेशश्च हुसेनश्च लियाकतः ॥ ५८ ॥

अन्ये युवकनेतारो वङ्गे प्रथितकीर्तयः ।
जुघुषुस्तिलकस्योच्चैः सभाध्यक्षपदस्थितिम् ॥ ५९ ॥

ध्येयहीनो मतिर्यस्य 'भिक्षां देहि' – पथे स्थिरा ।
न स सम्प्रति राष्ट्रस्य धुरं धारयितुं क्षमः ॥ ६० ॥

विरोधे महति प्राप्ते दादाभाई पितामहः ।
अलंकर्तुं पदं श्रेष्ठं प्रार्थितो राष्ट्रनेतृभिः ॥ ६१ ॥

अभवन्निर्णयस्तेषां भारते सर्वसंमतः ।
मुक्तकण्ठं च नौरोजिं शशंसुर्देशसेवकाः ॥ ६२ ॥

तिलको वर्णयामास देशसेवामखण्डिताम् ।
कृतज्ञं भारतं तस्य दीर्घकालीनसेवया ॥ ६३ ॥

राष्ट्राध्यक्षपदात् कर्तुमुचितं मार्गदर्शनम् ।
दादाभाई समर्थोऽस्ति राष्ट्रनेतृगणाधिपः ॥ ६४ ॥

अभूद् विलुप्तविश्वास उदारमतवादिषु ।
समाजवादिमुख्येन हिंडमनेन हि संगतः ॥ ६५ ॥

नेता भारतवन्द्योऽयं स्वाभिमानसुसंगतम् ।
मार्गं निदर्शयत्येव स्वराज्यध्येयपोषकम् ॥ ६६ ॥

प्राविशन्नग्नियानं ते तिलकश्चानुयायिनः ।
मुम्बय्यां कालिकास्थानं गन्तुं राष्ट्रहितैषिणः ॥ ६७ ॥

नागपूरेऽमरावत्यां मिलिताः सहकारिणः ।
दिने प्राप्ताः कालिकत्तां त्रयोविंशे दिसेंबरे ॥ ६८ ॥

स्थानकात् स्थानकाद् वृद्धिं प्राप्तो देशहितैषिणाम् ।
प्रवाहोऽन्ते गभीरश्च गङ्गौघ इव विस्तृतः ॥ ६९ ॥

विलीनः कालिकत्तास्थजनतासागरे तथा ।
यथा गङ्गाप्रवाहश्च विलीनः पूर्वसागरे ॥ ७० ॥

चित्तरञ्जनदासस्य प्रासादे तिलकोऽवसत् ।
अनुगैः सह खापर्डेमुंजेमित्रादिसंयुतः ॥ ७१ ॥

आतिथ्यकुशला तस्य पत्नी शीलवती सती ।
स्नानपानाशनादीनामतिथीनां निरन्तरम् ॥ ७२ ॥

कृत्वोचितव्यवस्थां सा तेभ्यस्तोषं ददौ गृहे ।
यदीप्स्यते विशेषं च पृच्छन्ती सादरं स्वयम् ॥ ७३ ॥

समायातश्चतुर्विंशे दिनाङ्के राष्ट्रनायकः ।
अग्नियानेन नौरोजिर्देशभक्तपितामहः ॥ ७४ ॥

अपूर्वं स्वागतं तस्य कृतं वङ्गनिवासिभिः ।
अलंकृत्य पुरीं सर्वामाम्रपल्लवतोरणैः ॥ ७५ ॥

ऊहू रथं तदारूढं युवका जयवादिनः ।
गीतवादित्रघोषेण नादितं तुमुलं नभः ॥ ७६ ॥

मेने वै धन्यमात्मानं पुष्पद्रुमलतागणः ।
समर्प्य नानापुष्पाणि नेत्रे देशहितैषिणाम् ॥ ७७ ॥

समारम्भेण मार्गेषु कालिकत्तापुरेऽनयन् ।
रथं ध्वजपताकाभिः शोभितं रथवाहकाः ॥ ७८ ॥

सौधाच् शुभ्रतमा लाजा ववर्षुः पौरकन्यकाः ।
चक्रुर्नीराजनं तस्मै रत्नदीपैः कुलस्त्रियः ॥ ७९ ॥

श्रान्तो दीर्घप्रवासेन समारोहश्रमेण च ।
स्थानं प्राप्य निवासस्य स विश्रान्त्युत्सुकोऽभवत् ॥ ८० ॥

व्याख्यानार्थं च बालस्य सभा बीडनचत्वरे ।
जाताध्यक्षपदे तस्या लज्पत्रायो व्यराजत ॥ ८१ ॥

राजप्रतिनिधिर्मिंटो गर्हयामास भारते ।
दाम्भिका इति सोन्मादः स्वदेशीव्रतचारिणः ॥ ८२ ॥

अधिकारमदान्धं तं तदा वाण्यङ्कुशेन सः ।
विव्याध तिलकस्तीव्रं व्याख्याने श्रोतृसङ्कुले ॥ ८३ ॥

आवेशेन सभाध्यक्षो जगर्ज निजसंमतिम् ।
सभाजनोऽतिसंतुष्टो व्याख्यानाभ्यां तयोस्तदा ॥ ८४ ॥

षड्विंशे दिवसे राष्ट्रसभाया अधिवेशनम् ।
प्रारब्धं स्वागताध्यक्षभाषणेन सुमण्डपे ॥ ८५ ॥

वङ्गप्रदेशविख्यातो रास्विहारीतिसंज्ञकः ।
घोषान्वयसमुत्पन्नो विधिशास्त्रविशारदः ॥ ८६ ॥

प्रबुद्धमुखरोऽध्यक्ष आसीत्स्वागतसंसदः ।
ग्रन्थकर्ताधिवक्ता च वाग्मी वाङ्मयलोलुपः ॥ ८७ ॥

वङ्गभङ्गेतिहासस्य तज्जातान्दोलनस्य च ।
वृत्तान्तो भाषणे तेन प्रौढशैल्या विवेचितः ॥ ८८ ॥

आरोहतु सभाध्यक्षः सभामध्ये वरासनम् ।
घोषः स्वभाषणस्यान्तेऽसूचयच् श्लक्ष्णया गिरा ॥ ८९ ॥

संमत्यर्थं सूचनायाः केचित् सभ्या बभाषिरे ।
आरुरोह पदं श्रेष्ठं नौरोजिः सर्वसंमतः ॥ ९० ॥

'वन्दे मातरम्' इत्येष घोषो जातो मुहुर्मुहुः ।
आपूरितं तदाकाशं जयघोषैश्च मङ्गलैः ॥ ९१ ॥

परीवृतो राष्ट्रभक्तैः श्रेष्ठैरुच्चासनस्थितः ।
रेजेऽर्क इव नक्षत्रैर्दादाभाई नभोऽङ्गणे ॥ ९२ ॥

मूलमेतदनर्थानां वङ्गदेशविभाजनम् ।
यतितव्यं निराकर्तुं शीघ्रं तदधिकारिभिः ॥ ९३ ॥

गमनं न्याय्यमार्गेण कर्तव्यं दण्डधारिभिः ।
उक्तं नौरोजिना स्पष्टमध्यक्षपदभाषणे ॥ ९४ ॥

समुन्नत्यै स्वदेशस्य स्वदेशीव्रतमुत्तमम् ।
चरितव्यं भारतस्थलोकेनोत्कर्षमिच्छता ॥ ९५ ॥

राष्ट्रीयता शिक्षणस्य राष्ट्रोत्कर्षप्रदायिनी ।
निजमातृपयःपानात् पुष्टिं विन्दति बालकः ॥ ९६ ॥

शरीरं भारतस्येदं संजातं व्याधिजर्जरम् ।
स्वराज्येनैव शुध्यन्ति दोषा राष्ट्रशरीरगाः ॥ ९७ ॥

वङ्गवासिसमारब्धो भाषणेऽभूत् समर्थितः ।
आङ्ग्लवस्तुबहिष्कारः सभाध्यक्षस्य धीमतः ॥ ९८ ॥

स्वीकृतैव चतुःसूत्री नवपक्षप्रवर्तिता ।
सभाध्यक्षेण पूज्येन मित्राणि तिलकोऽब्रवीत् ॥ ९९ ॥

निर्धारणाय चर्चायै विषयाणां सभागृहे ।
सभाध्यक्षानुमत्यैका नियुक्ता समितिस्तदा ॥ १०० ॥

विद्यादानस्य राष्ट्रीयपद्धतिः सर्वशंसिता ।
तदुत्कर्षाय साहाय्यं दातव्यमिति निर्णयः ॥ १०१ ॥

भारतीयस्त्यागपूर्वं स्वदेशीव्रतमाचरेत् ।
सदस्यानां विचारार्थं सूचनेति पुरस्कृता ॥ १०२ ॥

ततो मुम्बापुरीनेता मेथानामा सुविश्रुतः ।
त्यागोल्लेखो न कर्तव्यः प्रस्तावे स तदाब्रवीत् ॥ १०३ ॥

मेथाक्षेपः सभासद्भिर्बहुसंख्यैस्तिरस्कृतः ।
सूचना स्वीकृता तत्र सभासद्भिर्यथास्थिता ॥ १०४ ॥

प्रतिषिद्धो बहिष्कार उदारमतवादिभिः ।
समर्थनं कृतं तस्य सर्वैस्तिलकपक्षिभिः ॥ १०५ ॥

प्रतिद्वन्द्विविचाराणां प्रस्तावोऽन्वयकारकः ।
संमतोऽभूत् सदस्यानां सर्वेषामधिवेशने ॥ १०६ ॥

राष्ट्रस्य हितरक्षार्थमुपयुक्ता बहिष्कृतिः ।
न्याय्या वङ्गसमारब्धा सभ्यैरेवं विनिश्चितम् ॥ १०७ ॥

पालो बिपिनचन्द्राख्यः पञ्चप्राणा इव स्थितः ।
भारते नवपक्षस्य सभाया अधिवेशने ॥ १०८ ॥

चक्रे प्रस्तावतत्त्वानां व्याप्तेः पूर्णविवेचनम् ।
तच्च श्रुत्वा सभा जाता हर्षोल्लासप्रभाविता ॥ १०९ ॥

संचालनं सदस्यानां बहिष्कारस्य संमतम् ।
न केवलो बहिष्कार इति जानन्तु सज्जनाः ॥ ११० ॥

अपेक्षितो बहिष्कारो गतियुक्तो न तु स्थिरः ।
ग्रामाद् ग्रामान्तरं तस्य प्रान्तात् प्रान्तान्तरं गतिः ॥ १११ ॥

प्रसारः सर्वदेशेऽस्मिन्नुचितो ध्येयसिद्धये ।
अतो वङ्गेतरे भागे चालनं तस्य सूचितम् ॥ ११२ ॥

बहिष्कार आङ्ग्लदेशवस्तुनिष्ठो न केवलः ।
तद्विनिर्मितसंस्थानां वस्त्रादीनां च सूचितः ॥ ११३ ॥

यथाशक्ति यथाकालं कर्तुं तस्य विशेषतः ।
संचालनमनुज्ञाता जनाः सूचनयानया ॥ ११४ ॥

संमतिं दर्शयामासुः श्रोतारस्तालिवादनैः ।
प्रदीर्घकालपर्यन्तं भाषणान्ते महामतेः ॥ ११५ ॥

गोखलेमालवीयादिनेमस्तप्रमुखास्तदा ।
असंमतं पालभाष्यमित्याहुर्भाषणेषु ते ॥ ११६ ॥

पक्वान्नानां यथास्वादः क्षीरपानादनन्तरम् ।
लुप्यतीव तथा तेषां भाषितं नीरसं बभौ ॥ ११७ ॥

बहिष्कारस्य संप्राप्ता संमतिर्याधिवेशने ।
सोत्कर्षाय प्रभावस्य भारतस्य प्रकल्पिता ॥ ११८ ॥

विजयो नवपक्षस्य दुःसहः शल्यकोपमः ।
हृत्सु मेथादिनेमस्तधुरीणानां तदाभवत् ॥ ११९ ॥

दिनेऽधिवेशनस्यान्त्ये नववर्षाधिवेशनम् ।
नागपुर्यां भवेदेतत् सभामुख्यैर्विनिश्चितम् ॥ १२० ॥

महासभासमारोहस्यावसाने त्रयो जनाः ।
तिलको गोखले मेथा समेता यत्रकुत्रचित् ॥ १२१ ॥

न तु शक्यं त्वया कर्तुं यज्जातमिह संप्रति ।
मुम्बय्यामिति सावेशं मेथा तिलकमब्रवीत् ॥ १२२ ॥

तत्रापि तत् करिष्येऽहं ददौ तिलक उत्तरम् ।
गोखले प्राह मेथां च तिलको विस्मयावहः ॥ १२३ ॥

न ह्यशक्यं किमप्यस्ति तद्बुद्धेरिति मे मतम् ।
प्रत्युत्पन्नमतिः सोऽयमाश्चर्यजनको महान् ॥ १२४ ॥

कथिताख्यायिका ह्येषा विदुषा श्यामबाबुना ।
तिलकस्य सुमित्रेण पूर्वमेव प्रकाशिता ॥ १२५ ॥

स्वदेशीतत्त्वबोधाय संमेलनमवर्तत ।
सैयद्महंमदोऽध्यक्षो नबाबष्टिपुवंशजः ॥ १२६ ॥

लालाम्बालालगोपालबालकेळकरादयः ।
पालबानर्जिबोसाश्च समारम्भं समागताः ॥ १२७ ॥

जनानां भारते सर्वपक्षधर्मानुयायिनाम् ।
स्वदेशी संमतैवासीदिति केळकरोऽब्रवीत् ॥ १२८ ॥

इस्लामधर्मबन्धूनां नेताध्यक्षपदस्थितः ।
अद्येह तेन मुस्लीमसंमतिप्रत्ययो भवेत् ॥ १२९ ॥

राष्ट्रीयव्यवसायानामुत्कर्षाय महत्तमः ।
स्वदेशीतत्त्वसंमत्या यत्नः कार्यो जनैः सदा ॥ १३० ॥

विवेचितं नृसिंहेन सर्वं तच्च श्रोतृसंमतम् ।
व्यवसायविकासेन लोकस्याभ्युदयो भवेत् ॥ १३१ ॥

स्वदेशीव्यवसायानां जालं स्थाप्यं विशेषतः ।
जिल्हातहसिलानां च स्थानेष्वखिलभारते ॥ १३२ ॥

सूचना तिलकस्यैषा चैकमत्येन संमता ।
अनेकधर्मवर्णानां वङ्गदेशनिवासिनाम् ॥ १३३ ॥

सुरेन्द्रादिवयोवृद्धा राष्ट्रकार्यधुरंधराः ।
उच्चैरुद्घोषयामासुः स्वदेशीव्रतगौरवम् ॥ १३४ ॥

अध्यक्षेणोचितैः शब्दैर्दर्शिता निजसंमतिः ।
बभूव जयघोषेण सभायाश्च विसर्जनम् ॥ १३५ ॥

प्रस्थानाच्च दिने पूर्वं कालिकानगरे सभा ।
महती कारिता पौरैर्विद्यापीठस्य चत्वरे ॥ १३६ ॥

पालोऽध्यक्षोऽभवत् तत्र व्याख्याता तिलको गुरुः ।
नवपक्षस्य कार्यं च व्याख्यानविषयोऽद्भुतः ॥ १३७ ॥

'भिक्षां देहि'-पथत्यागः स्वावलम्बनसेवनम् ।
स्वराज्यध्येयपूर्त्यर्थं त्यागपूर्णः समुद्यमः ॥ १३८ ॥

बहिष्कारेण संयुक्तं स्वदेशीव्रतमुत्तमम् ।
मातृभूप्रेमभूयिष्ठा युवकाध्यापनप्रथा ॥ १३९ ॥

सविस्तरं चतुःसूत्रीमहत्त्वं विशदीकृतम् ।
व्याख्याने सार्थगम्भीरे तिलकेन महात्मना ॥ १४० ॥

पूजितं सुमनःस्रग्भिर्लोकमान्यं सभागतैः ।
सहस्राधिकसंख्याकास्तरुणा अब्रुवंस्तदा ॥ १४१ ॥

युवका देशकार्यार्थं युष्मदाज्ञाकरा वयम् ।
मातुर्विमुक्तये दास्याद् बलिदानं चिकीर्षवः ॥ १४२ ॥

निशम्य तेषां संकल्पं तिलको हर्षनिर्भरः ।
अवादीदल्पकालेन विजयी भारतो भवेत् ॥ १४३ ॥

सुप्रीताः सर्वलोका ऋषिनृपसहिता द्वापरे पूर्वकाले
यज्ञे धर्मस्य पुत्रं कुटिलकुरुगुरोरन्धराजस्य हित्वा ।
तद्वत् प्रीताः समस्ता अनुपमयशसा कालिकत्तासभाया
त्यक्त्वा मेथां फिरोजं तदनुचरयुतं मानभङ्गातितप्तम्
॥ १४४ ॥

रोषात् संभवति प्रवृद्धतमसो कौटिल्यवृत्तेः सदा
ध्येयापायकरो विकारवशतो विघ्नोद्यमो भीषणः ।
सच्छीलस्य परोपकारनिरतस्यासवितविद्वेषिणो
निष्कामस्य च योगिनोऽतिविषमः कालस्तदा यास्यति
॥ १४५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे वङ्गभङ्गोपपर्वणि राष्ट्रीयसभासंमतस्वराज्य-घोषणादिचतुःसूत्रीवर्णनाख्यः चतुस्त्रिंशस्तरङ्गः ।

## पञ्चत्रिंशस्तरङ्गः

नवपक्षस्य विजयः कालिकत्ताधिवेशने ।
युद्धहेतुर्दारुणोऽभूत् पुराणनवपक्षयोः ॥ १ ॥

वङ्गभङ्गान्दोलनेन संत्रस्ता अधिकारिणः ।
मेथातिलकयोर्मध्ये जहर्षुर्युद्धसंभवात् ॥ २ ॥

आङ्ग्लदेशे भारतस्य सचिवो मन्त्रिमण्डले ।
जानमोर्ले इति ख्यातस्तत्त्वज्ञो नीतिकोविदः ॥ ३ ॥

नवपक्षविनाशे च भारतीयाधिकारिणाम् ।
निर्बन्धात् कुटिलां नीतिमाश्रित्य स मनो दधे ॥ ४ ॥

तदर्थं सहकार्यं च नेमस्तेभ्यस्तदाप सः ।
लोकाधिकारविस्ताराश्वासनेन प्रशासने ॥ ५ ॥

आरेभिरे महोद्योगं तिलकस्यानुयायिनः ।
आगामिन्या नागपुर्यां यशसे राष्ट्रसंसदः ॥ ६ ॥

अध्यक्षस्तिलको भूयाद् नागपूरनिवासिनाम् ।
सभाधिवेशनस्येति प्रबलेच्छा स्फुटाभवत् ॥ ७ ॥

मुंजेप्रभृतयश्चक्रुः खापर्डेसंपुरस्कृताः ।
संचारं मुख्यभागेषु मध्यदेशविदर्भयोः ॥ ८ ॥

नवपक्षस्य साह्याय जनाः सर्वे समुत्सुकाः ।
सभाध्यक्षपदस्थाने तिलकस्थापनाय च ॥ ९ ॥

मेथानुयायिनः केचिज् जाता संशयसंकुलाः ।
समुपेता रायपुरे प्रान्तसंसन्महोत्सवे ॥ १० ॥

सभाध्यक्षपदं तत्र रङ्गनाथेन मण्डितम् ।
अधिवक्त्रामराधवत्यां भारतख्यातकीर्तिना ॥ ११ ॥

न 'वन्दे मातरम्' गेयं तद्घोषोऽपि निषेधितः ।
परिषच्चालकैः शिष्टैर्नेमस्तपथगामिभिः ॥ १२ ॥

समारूढे सभाध्यक्षे मण्डपे स्थानमुत्तमम् ।
वन्दे मातरमुद्घोष्य सभ्यैः स्थानं निनादितम् ॥ १३ ॥

कालिकत्तानिर्णयेषु स्वदेशीव्रतपालनम् ।
अभवत् संमतं तेषां प्रान्तसंसत्सभासदाम् ॥ १४ ॥

दुराग्रहाद् धुरीणानां नेमस्तपथगामिनाम् ।
कृत्वा चर्चा तु तैर्दीर्घां बहिष्कारो बहिष्कृतः ॥ १५ ॥

असंतुष्टा जनाः सर्वे प्रेक्षका इत्युपस्थिताः ।
गणेशं च समाजग्मुरायान्तं मण्डपाद् बहिः ॥ १६ ॥

पौरजानपदास्तत्र मिलिता बहुसंख्यया ।
तस्यां सभायां खापर्डे व्याख्यानमकरोत्तदा ॥ १७ ॥

बहिष्कारेण संयुक्तं स्वदेशीव्रतपालनम् ।
अवश्यं भारतीयानामाहोच्चैर्वाग्मिनां वरः ॥ १८ ॥

तिलकस्य स्वराज्यस्य मातृभूमेश्च घोषणैः ।
जयपूर्वैः सभाकार्यस्यावसानमभूत् तदा ॥ १९ ॥

विनिश्चयः शासनेन मध्यदेशविदर्भयोः ।
नवपक्षविनाशस्य कृतः संवृद्धमन्युना ॥ २० ॥

अधिक्षिप्तः शिवानन्दोऽमरावत्यधिकारिणा ।
राजद्रोहाख्यदोषार्थे न्यायाधीशेन दण्डितः ॥ २१ ॥

सप्तवर्षावधिस्तस्य सश्रमो बन्धनालये ।
निवास इति चादेशश्चण्डदण्डाधिकारिणः ॥ २२ ॥

जिल्हाविभागपत्राणां विदर्भेषु प्रधानता ।
प्राप्ता हरिकिशोरेण स्वराज्यध्येयवादिना ॥ २३ ॥

वक्रदृष्टिपथं तस्य शासनस्याधिकारिणाम् ।
अप्रियं वदतः सत्यं गतः संपादकस्तदा ॥ २४ ॥

पृथ्वीगीरो धीरवृत्तिर्गोस्वामिकुलभूषणः ।
गौरवर्णः प्रसन्नात्मा शालप्रांशुर्महाभुजः ॥ २५ ॥

दर्शनीयाननः शान्तो मितभाषी शुचिस्मितः ।
विद्याविनयसंपन्नो क्रीडाप्रेमी कलाप्रियः ॥ २६ ॥

साहित्यालंकृतप्रज्ञो देशसेवापरायणः ।
संपादको विदर्भेषु ख्यातनामा जनप्रियः ॥ २७ ॥

पत्राङ्के मुद्रिताः श्लोका राजद्रोहप्रसारकाः ।
मत्वाधिकारिवर्गेण प्राथिंपत्रं समर्पितम् ॥ २८ ॥

न्यायालये दर्शयित्वा वृत्तपत्रप्रकाशकम् ।
संपादकं दोषभाजं पृथ्वीगीरं जनादृतम् ॥ २९ ॥

श्रेष्ठदण्डन्यायधाम्नि प्रशासननियोजितः ।
बॉल्शानामाधिवक्ताभूदाक्षेपप्रतिपत्तये ॥ ३० ॥

प्रतिकर्तुं तदाक्षेपान् खापर्डे स्वयमागतः ।
आक्षेपितानां श्लोकानां निर्दोषत्वस्य सिद्धये ॥ ३१ ॥

न्यायालये दीर्घकालं साक्षिणः संपरीक्षिताः ।
संप्रश्नैश्च परिप्रश्नैः पुनःप्रश्नैश्च पक्षिणोः ॥ ३२ ॥

जातं व्यक्तं तदाज्ञानं भाषाया मुख्यसाक्षिणः ।
गणेशोक्तैः प्रतिप्रश्नैः कर्तुर्भाषान्तरस्य वै ॥ ३३ ॥

श्लोकसत्यार्थबोधाय भाषाशास्त्रविशारदाः ।
दोषिपक्षेण साक्ष्यर्थमाहूता रक्षणाय वै ॥ ३४ ॥

विश्वनाथो महाप्राज्ञो राजवाडेकुलोद्भवः ।
अन्येऽपि पण्डिताः श्रेष्ठा भाषाशास्त्रकृतश्रमाः ॥ ३५ ॥

साक्षिणा पत्रपद्यानामाङ्ग्ल्यां भाषान्तरं कृतम् ।
सदोषं सप्रमादं च विपरीतार्थबोधकम् ॥ ३६ ॥

अभूदिति च साधारं साक्षिभिः प्रतिपादितम् ।
युक्तभाषान्तराभावात् प्रार्थिपत्रं निरर्थकम् ॥ ३७ ॥

विस्तृते चाधिवक्तृभ्यां व्याख्याने च कृते तदा ।
शुश्राव न्यायकार्येशः परस्परविरोधिनी ॥ ३८ ॥

न्यायसाहाय्यपंचानां सुबोधाय विमोचने ।
न्यायाधीशकृते जातं तन्मतस्य प्रदर्शनम् ॥ ३९ ॥

दोषः सिद्ध इति प्राहुः समं पंचाः स्वनिर्णये ।
दण्डादेशं ततः प्राह न्यायसिंहासनाधिपः ॥ ४० ॥

कारागारे निवासश्च सश्रमोऽब्दद्वयावधिः ।
नीतो दोषी बन्दिशालां ततो रक्षाधिकारिभिः ॥ ४१ ॥

अपाहृतं मुद्रणस्य यन्त्रं साधनसंयुतम् ।
न्यायाधीशसमादेशाच्च शासनेन च सत्वरम् ॥ ४२ ॥

प्रसारोऽस्या दण्डनीतेरभूच्च शीघ्रं च भारते ।
प्लेगस्येव महाव्याधेर्लोकानां प्राणघातकः ॥ ४३ ॥

वङ्गाद् विदर्भमायाता पंजाबविषयं ततः ।
तया तत्र कृतोऽनर्थो जनताक्षोभकारकः ॥ ४४ ॥

शूरो जस्वंतसिंहाख्यः पंजाबीपत्रलेखकः ।
दोषीति निर्णयो जातो जातिद्वेषविवर्धकः ॥ ४५ ॥

कारागारे निबद्धोऽभूद् दीर्घकालं च सेवकः ।
न्यायदातुः समादेशाल्लोकक्षोभोऽभवत् ततः ॥ ४६ ॥

आङ्ग्लापराधिनः सर्वे निर्दोषा इति निर्णयः ।
आसीद् न्यायालये नित्यमाङ्ग्लपंचमतात् किल ॥ ४७ ॥

उवाच तस्मिन् पंजाबीपत्रे सत्यमिदं मुहुः ।
संपादकस्तु साधारं तस्मिन् क्रोधोद्धतोऽभवत् ॥ ४८ ॥

प्रशासनाधिकारी वै द्वेषबुद्धिप्रचोदितः ।
अदण्डयत् तमत्युग्रमिति लोकमतस्थितिः ॥ ४९ ॥

प्रक्षुब्धा जनता तस्माद् गौराङ्गापायहेतुना ।
प्रवृत्ता शान्तिभङ्गाय पंजाबेषु स्थले स्थले ॥ ५० ॥

अत्याचाराः कृता लोकैर्वर्णिता हि सविस्तरम् ।
रौलेटलिखिते वृत्ते शासनस्याज्ञया पुरा ॥ ५१ ॥

उल्लङ्घयन्ति लोकाः स्म संमेलननिषेधकान् ।
प्रशासनकृतादेशान् नित्यं बुद्धिपुरःसरम् ॥ ५२ ॥

लालालजपतः पूज्यो निर्दोषोऽपि निरोधितः ।
पुराणनीतिमाश्रित्य विना वैधसमीक्षणम् ॥ ५३ ॥

नीत्वा तं ब्रह्मदेशं वै मंडालेबन्धनालये ।
स्थानबद्धः कृतस्तत्र प्रान्ताधीशाज्ञया हठात् ॥ ५४ ॥

अजित्सिंहोऽपि लोकानां नेता पञ्चनदप्रियः ।
नीतश्च प्रतिबद्धश्च मंडालेबन्धनालये ॥ ५५ ॥

असंतोषानलज्वाला दुष्कृत्याज्यविवर्धिता ।
स्थिता व्याप्याखिलं देशमाब्धिसेतुहिमाचलम् ॥ ५६ ॥

मंडालये बन्दिशाला महीमण्डलमण्डनम् ।
यत्रोवास जगद्वन्द्या भारतोपासकत्रयी ॥ ५७ ॥

लालाजी लजपत्रायो बालो गाङ्गाधरिस्तथा ।
तिलकाख्यः सुभाषश्च बोसवंशविभूषणः ॥ ५८ ॥

देशार्थं त्यागकर्तारस्त्रयः स्वातन्त्र्यपूजकाः ।
भारतेऽज्ञानदीनानां लोकानां मार्गदर्शकाः ॥ ५९ ॥

मंडालेबन्धनागारे मन्ये जातोऽरुणोदयः ।
भारतस्य स्वराज्यस्य भक्तश्रेष्ठतपस्यया ॥ ६० ॥

लज्पत्रायः स्थानबद्धो विना न्यायगवेषणाम् ।
श्रुत्वा वार्तां लोकसिन्धुश्चुक्षोभातिभयावहः ॥ ६१ ॥

शासकान्याय्यकृत्यस्य निषेधार्थं सभाः कृताः ।
जनैः क्षुब्धैर्भारतीयैः सर्वधर्मानुयायिभिः ॥ ६२ ॥

गोपालो गोखले श्रेष्ठो नेमस्तानां धुरि स्थितः ।
प्रशासनापकृत्यस्य प्रादर्शयदसंमतिम् ॥ ६३ ॥

मुम्बापुरीकालिकत्तामद्रासेषु बृहत्सभाः ।
अदण्ड्यदण्डपापस्य निषेधाय कृता जनैः ॥ ६४ ॥

आदेशः प्रतिषेधस्य सभानां संप्रवर्तितः ।
मुम्बाप्रान्तेशसंमत्या पुण्यग्रामेऽधिकारिभिः ॥ ६५ ॥

संस्था या सार्वजनिका तस्याः सभ्याः समागताः ।
उक्तादेशनिषेधाय तत्रैवं तिलकोऽब्रवीत् ॥ ६६ ॥

कुरुताद्यादेशभङ्गं यूयं वाचेह संसदि ।
कृत्या भङ्गप्रसङ्गोऽप्यचिरादेवागमिष्यति ॥ ६७ ॥

तस्मिन् काले भीषणैका घटना समवर्तत ।
यामाकर्ण्य जनो देशे क्रोधाविष्टोऽभवत् तदा ॥ ६८ ॥

पंजाबे वसति स्मैका वीरन्वालीतिसंज्ञका ।
संक्लेशिताबला ग्रामे भर्त्रा वै दुःखिताशया ॥ ६९ ॥

उद्वेगेनाभिभूता सा पत्युर्गेहात् तदा निशि ।
बहिरागत्य गन्तुं सा गृहं भ्रातुर्मनो दधे ॥ ७० ॥

प्रविश्याग्निरथं दीना प्रस्थिता स्थानकं प्रति ।
सीमाप्रान्ते सुविख्यातं रावळ्पिंडीतिसंज्ञकम् ॥ ७१ ॥

अवातरद् रथात् तत्र मध्यरात्रे स्थिताबला ।
चिन्तयन्ती निवासाय स्थानकप्राङ्गणे स्थलम् ।। ७२ ।।

संचालकः स्थानकस्य तस्याः पुरत आययौ ।
किमर्थं तिष्ठसीहेति पर्यपृच्छदधोमुखीम् ।। ७३ ।।

अपेक्षेऽहं निराबाधं निशायां स्थानमल्पकम् ।
निद्रातुं, प्रातरुत्थाय भ्रातुर्गेहं व्रजाम्यहम् ।। ७४ ।।

विश्रान्तिस्थानमेकं स महिलायै ह्यदर्शयत् ।
स्थानकस्यैकदेशस्थमेकद्वारं तमोयुतम् ।। ७५ ।।

निवसेह सुखं रात्रावित्युक्त्वा स बहिर्गतः ।
बाला मनसि भीतापि प्राविशत् तत् स्थलं तदा ।। ७६ ।।

संप्राप्तोऽल्पेन कालेन पुनरेव स्थलं प्रति ।
प्रवृत्तः पिशुनः कर्तुं कामचेष्टां तया सह ।। ७७ ।।

प्रत्याख्यातोऽपशब्दैश्च ताडितोऽपि पराङ्मुखः ।
खलो भूयद्वितीयोऽसौ नाभवत् पापकर्मणः ।। ७८ ।।

शय्यास्थानं बलाद् नीतात्मनो मूरेण साबला ।
फस्लुद्दीनद्वितीयेन स्थानकस्याधिकारिणा ।। ७९ ।।

पातिव्रत्यव्रताद् भ्रष्टां बलाद् विषयलम्पटः ।
रुदन्तीं शपमानां च मदमत्तो चकार ताम् ।। ८० ।।

तस्यानुगोऽपि तत्पश्चात् पाशवीं वृत्तिमाश्रयन् ।
बालामत्याचरद् दीनां वीरन्वालीतिसंज्ञकाम् ।। ८१ ।।

पूर्वस्थानं च तां नीत्वा कामपूर्तेरनन्तरम् ।
जग्मतुः स्वीयमावासं पापात्मानौ नराधमौ ।। ८२ ।।

खलाभ्यां धर्षिता बाला गतप्राणा इवाभवत् ।
उपायं चिन्तयामास सा दण्डस्यापराधिनोः ।। ८३ ।।

निवेदितुं कथां सत्यां शासनस्याधिकारिणे ।
सभृत्याङ्ग्लापराधस्य दीनया निश्चयः कृतः ॥ ८४ ॥

पिण्डिरक्षादलस्थानं गत्वा तदधिकारिणे ।
न्यवेदयद् नीचकृत्यं सातिदुष्टापराधिनोः ॥ ८५ ॥

कृत्वा गवेषणं सम्यगधिकारी समादिशत् ।
कर्तव्यमविलम्बेन प्रार्थिपत्रसमर्पणम् ॥ ८६ ॥

न्यायालये दण्डनार्थं यथाविध्यपराधिनोः ।
न्यायाधीशः समारेभे सत्वरं तत्समीक्षणम् ॥ ८७ ॥

अभियोगेऽपरीहार्यं युरोपीयापराधिनः ।
न्यायाधीशस्य साह्यार्थं न्यायपंचनियोजनम् ॥ ८८ ॥

आङ्ग्लेतरास्त्रयस्तस्यां तथाङ्ग्ला नवसंख्यकाः ।
निर्धारिताः पंचजन्यामभियोगे यथाविधि ॥ ८९ ॥

साक्षिभिः प्रार्थनापत्रप्रोक्तदोषाभिसिद्धये ।
सविस्तरं यथाज्ञातं कथितं न्यायमन्दिरे ॥ ९० ॥

न दृष्टास्ति मया पूर्वं वीरन्वालीतिसंज्ञका ।
स्थानके महिला काचिद् या स्थिता न्यायमन्दिरे ॥ ९१ ॥

मिथ्यावोचदियं नारी नापराधो मया कृतः ।
न्यायाधीशेन संपृष्टो मूरः प्रथममब्रवीत् ॥ ९२ ॥

पूर्वोक्तं वितथं सर्वमवोचत् तदनन्तरम् ।
न्यायालये स्वरक्षायै भिन्नं प्रत्युत्तरं ददौ ॥ ९३ ॥

अनुकूलोपभोगाय द्रव्यं स्वीकृत्य सा स्वयम् ।
आसं रात्रौ हि वै तस्यां रममाणस्तया सह ॥ ९४ ॥

न कदापि बलात्कार उपभोक्तुं मया कृतः ।
बलात्कारकथा सर्वा तदुक्ता सर्वथानृता ॥ ९५ ॥

मत्स्नुषा वीरनावालिः शुद्धशीला पतिव्रता ।
उवाच श्वशुरस्तस्याः साक्षिस्थाने प्रतिज्ञया ॥ ९६ ॥

साक्षिणां च परीक्षान्ते वाक्किलौ पक्षयोर्द्वयोः ।
सविस्तरे भाषणे च चक्रतुः पक्षसिद्धये ॥ ९७ ॥

प्रशासनस्याधिवक्ताब्रवीद् दोषिविकल्पनम् ।
आत्मनिर्दोषितासिद्ध्यै निर्मूलं च निरर्थकम् ॥ ९८ ॥

अपराधस्य सिद्ध्यर्थं दोषिणोर्यत् पुरस्कृतम् ।
प्रार्थिपक्षेण तत् सर्वं चिन्तनीयं विशेषतः ॥ ९९ ॥

न्यायबुद्ध्या सभासद्भिः पंचजन्या विदेशजैः ।
सत्यं शुद्धं निर्विकारैर्यतितव्यं समीक्षितुम् ॥ १०० ॥

विशदं स्वमनः कृत्वा स्वसेत्यापद्गता मम ।
चिन्तयित्वा मतं देयं दोषभाग् वान्यथा जनः ॥ १०१ ॥

मूरोऽयं नापराधीति नवाङ्ग्लाः स्वमतं ददुः ।
बलात्कारकथा मिथ्या जाता द्रव्येण सा वशा ॥ १०२ ॥

फस्लुद्दीनोऽपि निर्दोषस्तथैवेति च तन्मतम् ।
ततस्तत् कथयामासुर्जात्यन्धास्ते विमोहिताः ॥ १०३ ॥

पंचानां च मतं ग्राह्यमस्तीति न्यायपालकः ।
उक्त्वा निर्णयपत्रस्य कृतं तेनाभिवाचनम् ॥ १०४ ॥

दोषिणाविति चाक्षिप्तावास्तां निर्दोषिणावुभौ ।
फस्लुद्दीनश्च मूरश्च निर्णये स्वे लिलेख सः ॥ १०५ ॥

सुशीला जारिणी प्रोक्ता निष्पापौ च नराधमौ ।
आहुर्जनास्तदालोक्य हंहो न्यायविडम्बनम् ॥ १०६ ॥

न्यायाधीशस्य सर्वत्र निर्णयो वाच्यतां गतः ।
दूषितं पक्षपातेन जातं हि न्यायदर्शनम् ॥ १०७ ॥

पञ्चस्वहःस्वतीतेषु न्यायाधीशविनिर्णयात् ।
प्रवृत्ता सात्महत्यार्थं मानिनी हिन्दुभामिनी ॥ १०८ ॥

मृत्युं मत्वा वरं दीर्घाज्जीवितादपमानितात् ।
कृत्वान्तं जडदेहस्य वीरनवाली दिवंगता ॥ १०९ ॥

शुश्राव तिलको वार्तामशुभां तापदायिनीम् ।
कर्णाटके यदा चित्तक्षोभस्तस्याभवत् तदा ॥ ११० ॥

भगिनीशीलरक्षार्थं बान्धवा दुर्बला इति ।
प्रययौ याचितुं न्यायं मन्येऽहं सेश्वरालयम् ॥ १११ ॥

तिलकः केसरीपत्रे लिलेखान्यायदुःखितः ।
सुशीलाहेलनं दुष्टं राष्ट्रोपप्लवकारणम् ॥ ११२ ॥

सकुलो रावणो नष्टो जानक्या धर्षणात् खलु ।
धृतराष्ट्रसुता नष्टा द्रौपद्या अवहेलनात् ॥ ११३ ॥

सतीनां धर्षणं यत्र प्रतिष्ठा व्यभिचारिणाम् ।
न तत्र निवसेल्लक्ष्मी राजशासनभूषिता ॥ ११४ ॥

वर्णिता वीरनावाल्याः कीर्तिर्वामनजोशिभिः ।
विदर्भकविभिः श्रेष्ठैः काव्ये स्फूर्तिपदे लघौ ॥ ११५ ॥

विदर्भे तत्कथागानं प्रबलक्षोभकारणम् ।
तेनाङ्ग्लेषु विरोधोऽभूद् लोकानां बलवत्तरः ॥ ११६ ॥

पंजाबक्रान्तिकार्यस्य समाप्येदं च वर्णनम् ।
वर्णये नागपूरस्य राष्ट्रकार्यमहोद्यमम् ॥ ११७ ॥

विनिश्चितं पूर्वमेव नागपूरेऽधिवेशनम् ।
भारतस्य धुरीणानां सभाया लोकवाञ्छितम् ॥ ११८ ॥

सभास्थानव्यवस्थायै निर्मित्यै मण्डपस्य च ।
आतिथ्याय च शिष्टानां समितिः संनियोजिता ॥ ११९ ॥

स्वागताय विनिर्मातुं नियमाश्च कृतास्तया ।
मध्यप्रदेशलोकानां समितिं शिष्टसंमताम् ॥ १२० ॥

पञ्चविंशतिमुद्राणां प्रदानेन जनो भवेत् ।
सदस्यः समितेस्तस्याः स्वागतार्थमिति स्थितिः ॥ १२१ ॥

उभौ पक्षौ नागपूरे पुराणनवसंज्ञकौ ।
संग्रहाय सदस्यानामारभेतां समुद्यमम् ॥ १२२ ॥

गङ्गाधरो मध्यदेशे नेमस्तगणनायकः ।
मुंजे च नवपक्षस्य नेता नेत्रचिकित्सकः ॥ १२३ ॥

शतान्यष्टौ सदस्यानां पुराणमतवादिनाम् ।
सदस्या नवपक्षीया अष्टादशशतं तथा ॥ १२४ ॥

सहस्रसंमितं द्रव्यं विंशत्या गुणितं च यत् ।
संप्राप्तं तैः सभासद्भ्यः पुराणमतवादिभिः ॥ १२५ ॥

सहस्रैः पञ्चभिर्न्यूनं शून्यप्राणसहस्रकम् ।
संगृहीतं नवैर्द्रव्यं तिलकस्यानुयायिभिः ॥ १२६ ॥

संख्या न्यूना त्रिपादेभ्यो नवपक्षसभासदाम् ।
पादादल्पाधिका चासीत् पुराणमतवादिनाम् ॥ १२७ ॥

निर्णायकमताभावे सभाध्यक्षविनिर्णये ।
असमर्थावुभौ जातौ ज्वलन्नेमस्तसंज्ञकौ ॥ १२८ ॥

स्वपक्षोपार्जितं द्रव्यं स्वीये हस्ते सुरक्षितम् ।
मुंजेप्रभृतिभिः सुज्ञैर्नवपक्षस्य नेतृभिः ॥ १२९ ॥

तिलकस्य स्थापनार्थं पदे राष्ट्रसभापतेः ।
दत्तं द्रव्यं नागपूरे नान्यकार्योपयोगि तत् ॥ १३० ॥

संप्रदेयं न तद् द्रव्यं समित्यै स्वागतस्य च ।
लोकेच्छाप्रतिकूलाया अपि मेथादुराग्रहे ॥ १३१ ॥

नागपूरस्थनेमस्ता आपन्नाः सङ्कटं महत् ।
अपर्याप्तो निधिस्तेषां समारोहप्रपूर्तये ॥ १३२ ॥

नेमस्तैरेव कर्तव्यो व्ययो द्रव्यस्य सज्जनैः ।
साग्रहं ते यदीच्छन्ति स्वसंमतसभापतिम् ॥ १३३ ॥

वयं व्ययं करिष्यामो बालोऽध्यक्षपदे यदि ।
संमन्यते लोकमान्यः पुराणमतवादिभिः ॥ १३४ ॥

विचाराणां विनिमयं सह नूतननेतृभिः ।
कर्तुमासन्ननिच्छन्तो नेमस्तानां पुरःस्थिताः ॥ १३५ ॥

यस्य द्रव्यं सभा तस्य सभापतिविनिर्णयः ।
तन्मतेनेति मे भाति रीतिर्न्यायानुसारिणी ॥ १३६ ॥

द्रव्यबुद्धिनरादीनां बलानां कार्यसाधकः ।
आवश्यकश्च संघातो राष्ट्रसंसत्समुद्यमे ॥ १३७ ॥

संख्याबलेन नेमस्ता नागपूरेऽतिदुर्बलाः ।
द्रव्येणापि सभाकार्यं कर्तुं ते नेश्वरा इति ॥ १३८ ॥

मेथादीनां विचारेण सभास्थानान्तराय ते ।
बभूवुस्तत्पराः सर्वे स्वाभिमानपराङ्मुखाः ॥ १३९ ॥

उद्घोषितं वृत्तपत्रे सभा नगरमन्दिरे ।
भविता स्वा०सदस्यानामन्त्ये सप्तेंबरे दिने ॥ १४० ॥

गङ्गाधरश्चिद्णवीसः स्वयमुद्घोषकोऽभवत् ।
व्यवस्थासमितेः पूर्वं तदर्थां संमतिं विना ॥ १४१ ॥

समायाताः सभास्थानं सहस्राधिकसंख्यया ।
पौराः सभानिषेधाय समयात् पूर्वमेव च ॥ १४२ ॥

सभासदः स्वा०सभायाः प्राविशंश्च सभागृहम् ।
उपाविशन्नासनेषु सर्वे तत्र यथासुखम् ॥ १४३ ॥

नासीद् वेत्रासनं रिक्तं तस्मिन् भव्यसभागृहे ।
कोलाहलः कृतो लोकैः स्थिता ये च गृहाद् बहिः ॥ १४४ ॥

नेमस्तानां प्रवेशोऽपि सभास्थानेऽतिदुष्करः ।
उच्छृङ्खलैर्जनैः केचिन्नेमस्ता अपमानिताः ॥ १४५ ॥

नूत्नपक्षस्य नेतारः सभास्थाने प्रतिष्ठिताः ।
आरेभिरे सभाकार्यं समये पूर्वनिश्चिते ॥ १४६ ॥

तिलकस्यानुगोऽनन्तः परांजपेकुलसंभवः ।
निर्वाचितः सभाध्यक्षः सभासद्भिरुपस्थितैः ॥ १४७ ॥

गङ्गाधरः स्वयं दृष्ट्वा सभारूपं न्यवर्तत ।
सभा नाधिकृता ह्येषा रोषादुक्त्वाऽञ्जसा गृहात् ॥ १४८ ॥

कोलाहलेन लोकानां प्राङ्गणे च सभागृहे ।
अनवस्था समुत्पन्ना महती शान्तिनाशिनी ॥ १४९ ॥

अधिकारी तदायातो रक्षादलसमन्वितः ।
परित्यक्तं सभास्थानं जनैर्दृष्ट्वा दलं च तत् ॥ १५० ॥

किंचित् कार्यमकृत्वा वै गतैवान्तं सभा तदा ।
तेनासील्लाञ्छिता कीर्तिर्नागपूरनिवासिनाम् ॥ १५१ ॥

नेमस्तप्रमुखा ऊचुः सभाभङ्गादनन्तरम् ।
नागपूरे नैव शक्यः सर्वराष्ट्रमहोत्सवः ॥ १५२ ॥

मतभेदस्य तीव्रत्वाद् विलुप्तैवैक्यभावना ।
उभयोः पक्षयोर्नासीत् सहकारस्य संभवः ॥ १५३ ॥

कृता हि नवपक्षीयैः सामसंपादनाय ये ।
यत्नास्ते निष्फला जाता अविश्वासोऽभवत् तदा ॥ १५४ ॥

पक्षद्वयस्य नेतारो गता मेथानिमन्त्रिताः ।
सहकार्यसमुत्पत्त्यै मुम्बई प्रतिपक्षयोः ॥ १५५ ॥

कोल्हट्करो वामनाख्यः पाध्ये माधवसंज्ञकः ।
पारखो गोकुळाख्यश्च नेमस्तदलनायकाः ॥ १५६ ॥

मुंजे नूतनपक्षस्य स्थाने तत्र समर्थकः ।
अळेकरादिभिर्मित्रैः सहासीत् समुपस्थितः ॥ १५७ ॥

मेथा आह न कर्तव्यो मित्रैर्नागपुरस्थितैः ।
निर्बन्धस्तिलकं कर्तुं सर्वराष्ट्रसभापतिम् ॥ १५८ ॥

नागपूरजनस्येच्छा स्वीकर्तव्या महाजनैः ।
विषये प्रत्युवाचास्मिन् मुंजे सविनयं तदा ॥ १५९ ॥

दृष्ट्वा सर्वसदस्यांस्ते पूर्वग्रहकलङ्कितान् ।
नागपूरं न्यवर्तन्त खिन्ना ग्रस्ता निराशया ॥ १६० ॥

अनिर्णीतं विवादान्ते समारोहस्थलं तदा ।
सभाचालकमुख्यानां पटूनां राजकारणे ॥ १६१ ॥

दशमेऽहनि तन्मासे समायाताः सभासदः ।
त्रयोदश प्रदेशेभ्यो भारतस्य विचक्षणाः ॥ १६२ ॥

संप्रेषितं मतं पत्रे सदस्यैरनुपस्थितैः ।
नागपूरे सभायाश्च कर्तव्यमधिवेशनम् ॥ १६३ ॥

मुधोळकरखापर्डेराघवाचार्यपारखाः ।
तिलकः केसरीकर्ता वाच्छामेथादयस्तथा ॥ १६४ ॥

नागपूरात् समायातौ मुंजे चाळेकरस्तदा ।
दातुं परिस्थितेर्ज्ञानं साहाय्याय सभासदाम् ॥ १६५ ॥

सदस्या मिलिताः सर्वे मेथावासेऽतिशोभने ।
न स्थातव्यमिहेत्याह वाशिं. फेरोजभृत्यकाः ॥ १६६ ॥

नागपूरं वर्जयित्वा सभा कार्या न कुत्रचित् ।
इति तेन गणेशेन सूचना विविधाः कृताः ॥ १६७ ॥

अभवन् निष्फलाः सर्वा मेथापक्षदुराग्रहात् ।
दुराराध्यप्रसादार्थमुपायः शरणं गतिः ॥ १६८ ॥

वादान्ते सहसा तस्मिन्नम्बालाल उपस्थितः ।
सुरते कार्यमित्याह सभाया अधिवेशनम् ॥ १६९ ॥

राष्ट्रकार्यसभाशाखा तत्रस्थाद्य निमन्त्रणम् ।
ददाति स्वीकृतिं तस्य कुर्वन्तु प्रार्थ्यते मया ॥ १७० ॥

स्वीकृतं तत् सभासद्भिरिति मेथा तमब्रवीत् ।
खापर्डेतिलकाभ्यां तु स्वाभिप्रायो न दर्शितः ॥ १७१ ॥

विदित्वा निर्णयं तेषां नागपूरनिवासिनौ ।
चक्रतुः प्रार्थनां लेखे दुःखितौ चावमानितौ ॥ १७२ ॥

निर्णयस्यास्य कर्तव्यो विचारः कृपया पुनः ।
अनेन दुःखिताः सर्वे नागपूरनिवासिनः ॥ १७३ ॥

दत्तमाश्वासनं पत्रे सहयोगस्य सर्वथा ।
द्रव्यश्रमप्रदानेन नियुक्ताधिजनैः सह ॥ १७४ ॥

प्रेषिता रूप्यमुद्राश्च ताभ्यामयुतसंमिताः ।
आश्वासनप्रत्ययार्थं पत्रेण सह चात्मनः ॥ १७५ ॥

मया पुनर्विचारस्य कारणं नैव दृश्यते ।
संसदः सचिवो वाच्छासंज्ञः प्रत्युत्तरं ददौ ॥ १७६ ॥

न स्वीकृतं तदा तेन द्रव्यं चायुतसंमतम् ।
संप्रेषितं तु तत् सर्वं ताभ्यां नागपुरं प्रति ॥ १७७ ॥

अमानिता जनाः सर्वे मध्यदेशनिवासिनः ।
नेमस्तनायकेनात्र मुम्बापुर्यां दुराग्रहात् ॥ १७८ ॥

अपमानस्य शल्यं तद् गतं हृत्सु व्यथाकरम् ।
पोषकं यत् क्रोधवृद्धेर्नेमस्तैश्च कृतस्य वै ॥ १७९ ॥

दुरुक्तैश्चेत् सिक्तः स्यात् पक्षभेदविषद्रुमः।
आत्मनाशफलं धत्ते द्वेषरागाभिरञ्जितम् ॥ १८० ॥

मेथादिभिः सभा नीता तापीतीरस्थपत्तनम्।
सुरतं गुर्जरे ख्यातं वाणिज्यस्थानमुत्तमम् ॥ १८१ ॥

स्थानान्तरस्य नेतॄणां मेथादीनां विनिर्णयात्।
लालाजिर्बन्धनागारात् परेद्युश्च विमोचितः ॥ १८२ ॥

लोकैश्च सर्वधर्माणां भारते सोऽभिवन्दितः।
रजन्यन्ते दिवं यातो दिवाकर इव द्विजैः ॥ १८३ ॥

अध्यक्षस्य पदं तस्मै सुरते राष्ट्रसंसदः।
दत्त्वा राष्ट्रसभाभक्ता स्वादरं दर्शयन्त्विति ॥ १८४ ॥

संदेशाः प्रेषिता लोकैः सर्वप्रान्ताधिवासिभिः।
सभासु दर्शयामासुः सुस्पष्टं संमतिं जनाः ॥ १८५ ॥

लोकसंतोषदा वार्ता प्रसृतानन्दवर्धिनी।
नेमस्तानामभूद् घोरचिन्ताया विषयश्च सा ॥ १८६ ॥

मेथाविनिश्चितः ख्यातो घोषो विधिविदां वरः।
लालाजावुदिते जातः खद्योत इव निष्प्रभः ॥ १८७ ॥

लज्जापतेर्यशस्त्यागदेशसेवासमुद्भवम्।
क्षीणवित्तस्य वीरस्य जनहृत्सिन्धुवर्धनम् ॥ १८८ ॥

घोषस्य महती प्रज्ञा द्रव्यार्जनपटीयसी।
विधिनैपुण्यसंभूता भोगवैभवशालिनः ॥ १८९ ॥

मुम्बापुर्यां स्वागतार्थं लालाजेरुत्सुका जनाः।
सहस्राधिकसंख्याकाः सादरं स्थानकं गताः ॥ १९० ॥

तिलकः समुपेयाय स्वयं मित्रजनैर्युतः।
कण्ठे समर्पयामास पुष्पहारं मनोहरम् ॥ १९१ ॥

न नेमस्तजनः कोऽपि संदृष्टः स्थानके तदा।
समागतः स्वागतार्थं लालाजेर्धैर्यशालिनः॥ १९२॥

सिन्धौ नृत्यं तरङ्गाणां यथा पूर्णेन्दुदर्शनात्।
तद्दर्शनाल्लोकसिन्धोस्तथाभूद् हर्षताण्डवम्॥ १९३॥

अलंकरोतु लालाजिः पदं राष्ट्रसभापतेः।
उच्चैरुद्घोषयामासुर्लोकाः स्थानकमागताः॥ १९४॥

लोकनिर्बन्धसंभूतां निराकर्तुं तदापदम्।
प्रयेते गोखलेवंश्यो गोपालश्चतुरः सुधीः॥ १९५॥

पत्रं लिलेख गोपालो लालाजिं प्रति सादरम्।
अध्यक्षपदसंप्राप्तिं न हीच्छामीति संप्रति॥ १९६॥

कर्तव्या घोषणा शीघ्रं युष्माभिस्त्यागिसेवकैः।
राष्ट्रैक्यवर्धनं पुंसामात्मनो गौरवाद् वरम्॥ १९७॥

अन्वमोदत लालाजिः सूचनां गोखलेकृताम्।
वृत्तपत्रेषु सर्वेषु स्वनिश्चयमघोषयत्॥ १९८॥

कार्या तिलकपक्षस्य कल्कत्तानिर्णयस्य वै।
स्वीकृतिः पुनरुक्तिश्च सुरतस्याधिवेशने॥ १९९॥

तिलकः प्रेषयामास सुहृदः सुरतं प्रति।
दिसेंबरतृतीयांशे प्रचारार्थं स्वपद्धतेः॥ २००॥

मुख्योऽभूद् वै विदर्भस्य गणेशस्तिलकोऽपरः।
गुर्जरीवाग्रहस्यज्ञो यो वक्तृत्वकलानिधिः॥ २०१॥

गोपालाच्युतमित्राभ्यां सहितः प्राविशत् पुरीम्।
भीमार्जुनाभ्यां सहितः कृष्णो राजगृहं यथा॥ २०२॥

आयातौ तौ नागपूराद् देशसेवकलेखकौ।
साहाय्याय गणेशस्य बालेनाज्ञापितावुभौ॥ २०३॥

व्याख्यानानि ददौ श्रीमान् शारदाकण्ठभूषणः ।
सुरतस्थेऽतिविख्याते पूज्यबालाजिमन्दिरे ॥ २०४ ॥

विस्तीर्णे प्राङ्गणं नित्यमुत्फुल्लं श्रवणोत्सुकैः ।
गणेशस्य जनैर्मुग्धैर्हास्यप्रचुरभाषणैः ॥ २०५ ॥

गुर्जरस्थप्रबोधाय मुद्रिता हस्तपत्रिकाः ।
गुर्जर्यां लिखितास्तज्ज्ञैश्चतुःसूत्रीसमर्थकाः ॥ २०६ ॥

संचालितं ज्ञानसत्रं नवपक्षाभिमानिभिः ।
साप्ताहिकं समारोहपूर्वं राष्ट्रीयसंसदः ॥ २०७ ॥

नवपक्षनिवासाय शिबिरं कल्पितं महत् ।
तिलकेच्छानुसारेण तज्ज्ञैस्तदनुयायिभिः ॥ २०८ ॥

अङ्गवङ्गकलिङ्गस्था नवपक्षानुयायिनः ।
पंजाबमध्यदेशस्था आन्ध्रतामिलवासिनः ॥ २०९ ॥

कर्णाटकमहाराष्ट्रविदर्भस्थास्तथापरे ।
समायाताः स्थले तस्मिन् सहकार्यसमुत्सुकाः ॥ २१० ॥

त्रयोविंशदिने यातस्तिलकः सुरतं प्रति ।
महाराष्ट्रविदर्भस्थैरनुयायिसमन्वितः ॥ २११ ॥

आगच्छन् स्वागतं कर्तुं स्थानकं बहवो जनाः ।
नीतस्तै राजमार्गेण समारोहेण तद्रथः ॥ २१२ ॥

चक्रुरुच्चैर्नामघोषं जयशब्दसमन्वितम् ।
पौरा अयुतसंख्याकाः सर्वे दर्शनलालसाः ॥ २१३ ॥

बालाजिप्राङ्गणे भव्ये व्याख्याने तिलकस्तदा ।
नवपक्षस्य तत्त्वानां वर्णयामास गौरवम् ॥ २१४ ॥

समायाता देशभक्ताः स्वराज्यप्राप्तिहेतवः ।
सभाभङ्गाय नायातः कोऽपि वा कलहाय वै ॥ २१५ ॥

त्वरया सम्यगुद्धर्तुं नौरोजिकृतनिर्णयान् ।
सदस्यसंमतांस्तस्मिन् कालिकत्ताधिवेशने ॥ २१६ ॥

अस्मद्दलस्य कर्तव्यं राष्ट्रकार्योत्सुकैर्जनैः ।
साहाय्यं कार्यसिद्ध्यर्थं स्वातन्त्र्यप्रापकं च यत् ॥ २१७ ॥

दादाभाई पूजनीयो यथा भीष्मपितामहः ।
माळवी गोखले मेथा तच्छिष्या न च तत्समाः ॥ २१८ ॥

न स्वीकार्यस्तदादेशः प्रभिन्नः पूर्वनिर्णयात् ।
तत्स्थैर्यार्थं यतन्ते ते नवपक्षाभिमानिनः ॥ २१९ ॥

सुहृदो स्मो गुर्जराणां नामित्रा वापहारिणः ।
स्वातन्त्र्योपासका नित्यं भद्रमेव चिकीर्षवः ॥ २२० ॥

एवं संप्रार्थिता लोकास्तिलकेन महात्मना ।
सर्वे वै दर्शयामासुः संतोषं तालिवादनैः ॥ २२१ ॥

तदुत्तरे दिने सायं द्वितीयं भाषणं कृतम् ।
असंख्येयाः सभास्थाने श्रोतारः समुपस्थिताः ॥ २२२ ॥

आयास्यतश्च लालाजेर्वेला ज्ञाता जनैः पुरा ।
उपतस्थुः स्वागताय स्थानकं बहुसंख्यया ॥ २२३ ॥

पुष्पहारै राष्ट्रभक्तः पूजितः स्थानके जनैः ।
बन्धुर्दीनस्य लालाजी वाहनादवतीर्णवान् ॥ २२४ ॥

जनैरलंकृता मुख्या मार्गास्ते तोरणैर्नवैः ।
पूगीफलैर्नारिकेलैर्महावस्त्रैश्च शोभितैः ॥ २२५ ॥

घण्टापथे रथो नीतो वाद्यघोषसमन्वितः ।
लालाजी वै तमारूढः सर्वलोकाभिवन्दितः ॥ २२६ ॥

लालाजी तिलकश्चैव समारोहादनन्तरम् ।
परिस्थितिविचारार्थं मिलितौ दूरदर्शिनौ ॥ २२७ ॥

प्रथमं तद्दिने जातं नवपक्षस्य मेलनम्।
अरविन्द क्रान्तिदर्शी तदध्यक्षपदे स्थितः ॥ २२८ ॥

तिलकश्चारविन्दश्च नवपक्षपुरोहितौ ।
कथयामासतुः कार्यं नवपक्षाभिचिन्तितम् ॥ २२९ ॥

तत्त्वज्ञानं सशास्त्रार्थं ताभ्यां मीमांसितं तदा।
बोधाय नवपक्षस्य सर्वेषामनुयायिनाम् ॥ २३० ॥

चतुःशतं सदस्याश्च नवपक्षाभिमानिनः।
याताः प्रतिनिधेः प्राप्य पदं राष्ट्रसभां प्रति ॥ २३१ ॥

निर्वाचिताः सभासद्भिरादौ सर्वेऽधिकारिणः ।
आगाम्यब्दे व्यवस्थायै स्वपक्षस्य हितैषिणः ॥ २३२ ॥

महासभागृहे भव्ये समारब्धेऽधिवेशने ।
मण्डपस्थस्वपक्षस्य सदस्यानां नियन्त्रणम् ॥ २३३ ॥

मतदानक्षणे प्राप्ते कर्तव्यं ह्यधिकारिभिः ।
निर्वाचनप्रसङ्गेऽपि सभाध्यक्षपदस्य च ॥ २३४ ॥

मन्त्राय मिलिता एते प्रतिनिध्यधिकारिणः ।
सामोपायप्रयत्नार्थं मण्डलं तैर्नियोजितम् ॥ २३५ ॥

सामोपायादिचर्चायै प्रतिपक्षाधिकारिभिः ।
कृता यत्नाश्च विफला बभूवुस्तद्दुराग्रहात् ॥ २३६ ॥

अदर्शयन्न सौजन्यं दर्शनालापयोरपि ।
मेथाप्रभृतिनेमस्ता मण्डलस्याभ्यसूयकाः ॥ २३७ ॥

सभायां नवपक्षस्य चर्चाया आशयो ह्ययम्।
यतितव्यं सभासद्भिः सामसंपादनाय वै ॥ २३८ ॥

मेथादीनां संमता चेद् यदि पूर्वाब्दनिर्णयाः।
संधिं कुर्यादिति स्पष्टं नवपक्षेण निश्चितम् ॥ २३९ ॥

कुर्यात् संशोधनं युक्तं सन्ध्यभावे प्रवर्तकः ।
तिलको नवपक्षस्य सभाया अधिवेशने ॥ २४० ॥

निर्णयः संमतो ह्यस्य सर्वेषां च सभासदाम् ।
एवमुद्घोषितं सर्वैः सभासद्भिरुपस्थितैः ॥ २४१ ॥

यतेऽहमाह लालाजिः सामार्थे तिलकं प्रति ।
अवश्यं प्रथमं मन्ये पक्षप्रमुखमेलनम् ॥ २४२ ॥

ददावनुमतिं दादा वैदर्भः संशयाकुलः ।
यशःप्राप्त्यै प्रार्थयेऽहं परमेशं दयार्णवम् ॥ २४३ ॥

लालाजिः प्रातरुत्थाय गोपालं द्रष्टुमञ्जसा ।
अध्यक्षस्वागतार्थं च जगाम स्थानकं प्रति ॥ २४४ ॥

संप्राप्तेऽवसरे तत्र गोपालं प्रत्युवाच सः ।
मेलनं पक्षमुख्यानां कार्यमेवेति सत्वरम् ॥ २४५ ॥

नैवोत्तरं ददौ तस्मै गोपालस्तोषदायकम् ।
विज्ञातमिति कालेन तिलकेनापि तद्दिने ॥ २४६ ॥

माळवीसदनं प्राप्तौ खापर्डेतिलकौ यदा ।
व्यग्रत्वाद् देवपूजायां न ददर्श स तावुभौ ॥ २४७ ॥

सुरेन्द्रः प्रेषयामास संदेशं माळविं प्रति ।
तदानीं स्वागताध्यक्षं चर्चायै तिलकेन वै ॥ २४८ ॥

नायातमुत्तरं तस्येत्याहुर्वै सज्जनास्तदा ।
सभासमयपर्यन्तं कृता यत्ना वृथा गताः ॥ २४९ ॥

निष्फलत्वात् प्रयत्नानां नेमस्तानां दुराग्रहात् ।
प्रादुरासीद् हृदि क्रोधस्फुलिङ्गो नवपक्षिणाम् ॥ २५० ॥

तदापमानतैलस्य सेचनात् स मुहुर्मुहुः ।
ऊर्ध्वज्वालः प्रजज्वाल वायुनेवैधितोऽनलः ॥ २५१ ॥

प्राप्ता राष्ट्रसभास्थानमुक्तकाले सभासदः ।
आङ्ग्लभारतभागेभ्यो भारतोद्धारहेतवः ॥ २५२ ॥

स्वे स्वे स्थाने सुखासीना विलम्बव्यस्तमानसाः ।
प्रतीक्षमाणा मुख्यानां प्रवेशं मण्डपे शुभम् ॥ २५३ ॥

यशोऽपयशसोर्वार्तां सुखदुःखानुबन्धिनीम् ।
शृण्वन्तः सामयत्नस्य मध्यस्थाभीप्सितस्य च ॥ २५४ ॥

वेगेन दोलां गच्छन्तीं नीचैरुच्चैः क्रमेण वै ।
आरूढानामिवोद्भूता सदस्यानां मनःस्थितिः ॥ २५५ ॥

विदर्भनागपूरस्थसदस्यानां सभागृहे ।
स्थानमासीद् विप्रकृष्टं स्थानाद् मुम्बइवासिनाम् ॥ २५६ ॥

स्थाने स्थाने स्वास्थ्यरक्षासैनिकानामुपस्थितिः ।
मण्डपे शान्तिरक्षार्थं कारिता चालकेच्छया ॥ २५७ ॥

त्रिवादने च समये प्राविशन् राष्ट्रपूरुषाः ।
मेथाप्रभृतयो ज्येष्ठा अध्यक्षेण समन्विताः ॥ २५८ ॥

मेथापुरस्कृताः सर्वे दीर्घपङ्क्तौ प्रतस्थिरे ।
सत्कृता वै जनैः कैश्चिदपरैर्धिक्कृतास्तथा ॥ २५९ ॥

उत्थापनं ददुः केचित् सभाध्यक्षाय मण्डपे ।
तदैवान्ये जना ऊचुर्बहिः शीघ्रं निवर्तताम् ॥ २६० ॥

घोषैश्च मण्डपे पूर्णे परस्परविरोधिभिः ।
निर्विघ्नं श्रेष्ठिनः प्रापुर्व्यासपीठं महोन्नतम् ॥ २६१ ॥

उपविष्टाः स्वासनेषु धुरीणा राष्ट्रसंसदः ।
मेथादयः सभासूत्रधाराश्चाङ्ग्लसभासदः ॥ २६२ ॥

तिलकोऽपि सभास्थानं प्राप्तोऽसौ सहकारिभिः ।
प्रान्तप्रतिनिधिस्थाने स्वासनं शुशुभे तदा ॥ २६३ ॥

सभासंचालकः कोऽपि न तं द्रष्टुं तदागतः ।
प्रार्थनार्थं व्यासपीठं प्रति गन्तव्यमित्यपि ॥ २६४ ॥

प्रेषयामास पत्रं स सुरेन्द्रं वङ्गनायकम् ।
लजपन्नामनिर्देशः कर्तव्यो न स्वभाषणे ॥ २६५ ॥

सन्धेरभावाद् बद्धस्त्वं कर्तुं समयपालनम् ।
धैर्यमेरुर्लिलेखैवं पत्रे मित्रं निराशया ॥ २६६ ॥

अन्यच्च स्वागताध्यक्षं प्रेषयामास पत्रकम् ।
संस्मारयन् स्वकर्तव्यमार्गं नीतिनिरूपितम् ॥ २६७ ॥

निर्वाचनविधेः पूर्वमध्यक्षस्य करोम्यहम् ।
सभायां सूचनामेकां मूलप्रस्तावशोधिनीम् ॥ २६८ ॥

प्रत्युत्तरं पत्रकस्य न ददौ माळवी तदा ।
आचरत् सभ्यतां त्यक्त्वा सभाध्यक्षोऽप्यशिष्टवत् ॥ २६९ ॥

संप्राप्तेषु वरिष्ठेषु स्वस्थानेषु स्थितेषु च ।
उदतिष्ठत् स्वागताय माळवी कार्यतत्परः ॥ २७० ॥

समग्रं भाषणं तस्य श्रुतं शान्त्या सभाजनैः ।
प्रान्तागतैः सदस्यैश्च प्रदीर्घं प्रेक्षकैरपि ॥ २७१ ॥

महासभाया अध्यक्षपदं घोषो महाशयः ।
स्वीकरोत्विति देसाई चक्रे वै सूचनां ततः ॥ २७२ ॥

तस्मिन्नेव क्षणे नष्टं सभास्वास्थ्यमिवाभवत् ।
महाकष्टेनावसानं नीतं तेन स्वभाषणम् ॥ २७३ ॥

ततो यातो व्यासपीठं भारतस्य बृहस्पतिः ।
वन्द्योपाध्यायवंशस्य वङ्गभूमेश्च भूषणम् ॥ २७४ ॥

नैपुण्यमाङ्ग्लभाषायां यस्य सर्वैः प्रशंसितम् ।
देशभक्तोत्तमो यश्च वरिष्ठोऽभूत् स्वतेजसा ॥ २७५ ॥

पूर्वं कृतां सभामध्ये समितेः कार्यवाहिना।
सूचनामनुमन्तुं स सुरेन्द्र उपचक्रमे ॥ २७६॥

तन्मुखान्निर्गते वाक्ये निनादस्तुमुलोऽभवत्।
तूष्णीं भव न कर्तव्यं भाषणं च त्वयाधुना ॥ २७७ ॥

गन्तव्यं स्वगृहं शीघ्रं स्मर्तव्यं मिदनापुरम्।
वाक्यैरेवंविधैरुक्तैः सभासद्भिर्मुहुर्मुहुः ॥ २७८ ॥

तिष्ठन्तु सज्जनास्तूष्णीं स्तब्धतां धारयन्तु च।
इत्याक्रोशैः स्थापकानां तथा शान्तेः सभागृहे ॥ २७९ ॥

गदतोऽपि स्वनैरुच्चैः श्रवणीयं सभासदाम्।
भाषणं नाभवत् तस्य वक्तुर्यत्नो वृथा गतः ॥ २८० ॥

सुरेन्द्रनाथ आरुह्य मञ्चमेकं समुन्नतम्।
निषादस्वनमाश्रित्य भाषणं कर्तुमुद्यतः ॥ २८१ ॥

सभास्थानस्थितैर्लोकैर्न किञ्चिदपि तैः श्रुतम्।
कर्कशैर्ध्वनिभिः सर्वैर्मण्डपोऽभूत् समाकुलः ॥ २८२ ॥

माळवी प्रार्थयामास भाषणं श्रूयतामिति।
घण्टानादं स्वहस्तेन मुहुः कृत्वा च कर्कशम् ॥ २८३ ॥

नेतारस्तां समालोच्य दुर्निवारां परिस्थितिम्।
सभाकार्यविरामस्य मेनिरे निर्णयं वरम् ॥ २८४ ॥

क्षणात् तं घोषयामासुर्निष्क्रान्ताश्च सभासदः।
अतर्कितनिरोधेन भूत्वा स्तिमितबुद्धयः ॥ २८५ ॥

अपमानः सुरेन्द्रस्य कृतो वङ्गीयबान्धवैः।
मिदनापूरसंभूतघटनाक्षुब्धमानसैः ॥ २८६ ॥

यद् वृत्तं मण्डपस्थाने तिलकस्तेन दुःखितः।
कोलाहलेन कार्यस्य सर्वनाशो भविष्यति ॥ २८७ ॥

तिलकः पीठमारुह्य जगाद स्वानुयायिनः ।
पुनः सर्वान् समाहूय विचारार्थं विचक्षणः ॥ २८८ ॥

आदिशत् तिलकस्तत्र स्थातव्यं शान्तचेतसा ।
नवपक्षसभासद्भिः सभायाः श्वोऽधिवेशने ॥ २८९ ॥

नैव ब्रूयुः स्वरेणोच्चैरस्मत्पक्षानुयायिनः ।
तिरस्कर्तुं सभास्थाने वक्तारं वा विनिन्दितुम् ॥ २९० ॥

सभाकार्यविरामार्थं करिष्ये सूचनामहम् ।
अनन्तरं सभाध्यक्षप्रस्तावस्यानुमोदनात् ॥ २९१ ॥

यतितव्यं न सामार्थमाहुः केचित् सभासदः ।
अपमानास्पदं भाति नेमस्तानुनयोऽधुना ॥ २९२ ॥

मानापमानयोस्तुल्यो राष्ट्रकार्यस्य सिद्धये ।
भूत्वा नित्यं यत्नशीलो गच्छामि सकलान् जनान् ॥ २९३ ॥

तिलकः स्वीयमित्रेभ्यः सम्यक् प्रत्युत्तरं ददौ ।
प्रकृत्या भीरवः सन्ति नेमस्ता न तु शत्रवः ॥ २९४ ॥

शत्रुरेको भारतस्याहितैषी ह्याङ्ग्लदेशजः ।
इहागत्याभवद् राज्याधीशो योऽन्यायवर्त्मना ॥ २९५ ॥

यत्नं करोमि नेमस्तैः सन्धिसंपादनाय च ।
यत्नेऽफले पूर्वमेव कृतं कर्तव्यदर्शनम् ॥ २९६ ॥

सरैय्यस्तिलकं यात्वावदद् यत्नं करोम्यहम् ।
गोपालेन सहालापस्तव शीघ्रं भवेदिति ॥ २९७ ॥

तिलकः कथयामास तस्मै सर्वां स्वयोजनाम् ।
मण्डपे करणीयस्य सन्धियत्नेऽफले सति ॥ २९८ ॥

निवेदयामि तत् सर्वं मेथां प्रति च सोऽब्रवीत् ।
गोपालं द्रष्टुकामश्च प्रतस्थे सत्वरं ततः ॥ २९९ ॥

प्रभातेऽन्यदिने यात्वा तिलकाय जगाद सः ।
नास्त्येव शक्यता सन्धेर्नैमस्तास्त्वद्विरोधिनः ॥ ३०० ॥

नवपक्षस्य नेतारो महाराष्ट्रविदर्भयोः ।
गणेशो बालकृष्णश्च रावगङ्गाधरस्तथा ॥ ३०१ ॥

मेथावाच्छामाळवीनां दर्शनार्थं गतास्त्रयः ।
गेहे सन्तोऽपि नावाञ्छन् वीक्षितुं ते समागतान् ॥ ३०२ ॥

शिष्टाचारातिपातेन मेथावाच्छानुयायिनः ।
क्रोधस्य विषयो जातो नवपक्षानुयायिनाम् ॥ ३०३ ॥

नगण्यस्तिलकोऽस्माकं गुर्जराणां महारिपुः ।
अन्यः शिवाजिरायातो हेतुनाक्रमणस्य च ॥ ३०४ ॥

अपशब्दं प्रजल्पन्तः केचिद् गुर्जरबान्धवाः ।
प्राविशन् मण्डपं द्रष्टुं सभाया अधिवेशनम् ॥ ३०५ ॥

बहवः शक्तिसंपन्ना निरुद्योगा निरक्षराः ।
अदृश्यन्त स्थिता हस्तधृतकाष्ठाः सभास्थले ॥ ३०६ ॥

अनन्तरं च मध्याह्नात् सुरेन्द्रः स्वानुयायिभिः ।
उपस्थितः सभास्थानं तद्दिने भृगुवासरे ॥ ३०७ ॥

विज्ञप्त्या माळवेः कर्तुं सुरेन्द्रो भाषणं तदा ।
आरेभे पुरतस्तिष्ठन् व्यासपीठस्य गीष्पतिः ॥ ३०८ ॥

अशृण्वन्नेकचित्तेन भाषणं तत् सभासदः ।
ददौ पश्चादल्पशब्दैर्मोतिलालोऽनुमोदनम् ॥ ३०९ ॥

प्रेषितस्तिलकेनागाद् नृसिंहो माळविं प्रति ।
सुरेन्द्रभाषणस्यान्ते वक्तुं तस्मै स्वकल्पनाम् ॥ ३१० ॥

सूचनास्मरणं दातुं भाषणावसरस्य च ।
व्याख्यानस्यावसाने च मोतिलालसुरेन्द्रयोः ॥ ३११ ॥

देयं निमन्त्रणं मह्यं भाषणाय सभागृहे ।
इति सूचयितुं पूर्वं प्रस्तावस्य विनिर्णयात् ॥ ३१२ ॥

प्रदाय माळवीहस्ते स्वल्पं तिलकपत्रकम् ।
यस्मिन्नुपरिनिर्दिष्टा तेन विज्ञापना कृता ॥ ३१३ ॥

प्रत्यागच्छद् निजस्थानं नरसिंहो विनोत्तरम् ।
तिलको माळवेर्जज्ञे कुटिलत्वं मनोगतम् ॥ ३१४ ॥

अवलोक्य न पत्रं तद् न निश्चित्य सभामतम् ।
तदानीं माळवी प्राहाध्यक्षोऽयं सर्वसंमतः ॥ ३१५ ॥

न कस्यापि वचस्तस्य गतं कर्णपथं तदा ।
प्रतीक्षां मतदानस्य चक्रिरे वै सभासदः ॥ ३१६ ॥

परित्यज्यासनं पूर्वं घोषोऽध्यक्षासने स्थितः ।
गृहीत्वा पुस्तिकां हस्ते पठनायोद्यतोऽभवत् ॥ ३१७ ॥

स्थित्वा तु पुरतस्तस्य तत्क्षणे तिलकोऽब्रवीत् ।
सूचनां प्रेषितां पूर्वं पुरस्कर्तुमहं स्थितः ॥ ३१८ ॥

सासीद् नियमबाह्येति प्राह तं माळवी तदा ।
उवाच तिलकस्तज्ज्ञो न ह्यसि त्वं सभापतिः ॥ ३१९ ॥

घोषोऽवददवैधा सा सूचना मन्मते तव ।
सभापतिपदेऽद्यापि नैवासि त्वं प्रतिष्ठितः ॥ ३२० ॥

एवं प्रत्युत्तरं दत्त्वा तिलकः संमुखोऽभवत् ।
सभाजनान् समुद्दिश्य वक्तुं निजमनोगतम् ॥ ३२१ ॥

वक्तृपीठं परित्यक्तुं घोषस्तिलकमादिशत् ।
तिलकस्तं प्रत्युवाच स्थानं नैतत् त्यजाम्यहम् ॥ ३२२ ॥

बलेनैव समुद्धृत्य नेतव्योऽहमितो ह्यधः ।
धीरगम्भीरया वाचा निश्चयात्मा जुघोष सः ॥ ३२३ ॥

व्यस्तहस्ताग्रयोः कृत्वा बन्धं वक्षःस्थले दृढम् ।
निर्भयोऽभिमुखः सभ्यान् धीरोऽतिष्ठदिवाचलः ।। ३२४ ।।

आरक्तलोचना दृष्टा देशभक्तिः शरीरिणी ।
तदा नन्वतिसंतप्ता पिशुनैरपमानिता ।। ३२५ ।।

बभाषिरे तमुद्दिश्य गालिवाक्यान् गतत्रपाः ।
नेमस्ता गुर्जराः केचिदवलिप्ता नराधमाः ।। ३२६ ।।

वृष्टेः पूर्वं यथा मेघगर्जना कर्णकर्कशा ।
तथा राष्ट्रसभास्थाने गाल्यारावः श्रुतो महान् ।। ३२७ ।।

तिलकासूयकः कश्चित् कोलाहल उपस्थिते ।
धृत्वा चतुष्पदीमेकां चिक्षेप तिलके खलः ।। ३२८ ।।

गोखले उत्थितः स्थानादवलोक्य चतुष्पदीम् ।
आह प्रक्षुब्धचेतास्तं सभास्थानीयदुर्जनम् ।। ३२९ ।।

भविष्यत्यपकृत्यं ते घोरानर्थस्य कारणम् ।
लोमस्पर्शेऽपि बालस्य रक्तस्रावो भवेदिह ।। ३३० ।।

पंजाबी भगतः शीघ्रं गत्वा तिलकसंनिधिम् ।
चतुष्पदीं समायातीमूर्ध्वबाहुः समग्रहीत् ।। ३३१ ।।

लीलया कन्दुकं क्रीडानिपुणः प्राङ्गणे यथा ।
मधुसूदनचापल्यं शंसितं सज्जनैस्तदा ।। ३३२ ।।

येतेऽध्यक्षो निनादेन घण्टिकाया मुहुर्मुहुः ।
शान्ति व्यर्थं विनिर्मातुं पठितुं च स्वभाषणम् ।। ३३३ ।।

रक्तवर्णं व्यासपीठे वस्तु ज्योतिरिवाम्बरात् ।
मेथासुरेन्द्रयोर्गल्लं तदा स्पृष्ट्वा समापतत् ।। ३३४ ।।

पादत्राणं तदासीद् वै महाराष्ट्रजनोचितम् ।
अज्ञेयत्वात् क्षेपकस्य लक्ष्ये तर्को निरर्थकः ।। ३३५ ।।

नेमस्ता निर्गताः प्रायः पार्श्वद्वारेण मण्डपात् ।
आसन् सभागृहे तत्र छिन्धिभिन्धीतिभाषिणः ॥ ३३६ ॥

केचित् क्षुद्रा महाराष्ट्रद्वेषिणो गर्ह्यजीविनः ।
अन्ये तिलकरक्षार्थे स्थितास्तिलकपक्षिणः ॥ ३३७ ॥

हस्तमुष्टिपदाघातैः काष्ठयष्टिभिरेव च ।
अन्योन्यांश्च प्राहरंस्ते स्वैरिणः छत्रदण्डकैः ॥ ३३८ ॥

प्रशासनस्याधिकारी रक्षादलसमन्वितः ।
शान्तिं स्थापयितुं दक्षो मण्डपे सायुधोऽविशत् ॥ ३३९ ॥

भिन्ने स्वास्थ्ये समुत्पन्ने द्वन्द्वयुद्धे च मण्डपे ।
त्रायतामबलावर्गो बालः प्राहानुयायिनः ॥ ३४० ॥

दत्त्वा संरक्षणं ताभ्यो नेतव्यास्ताः सभागृहात् ।
बहिर्व्यवस्था कर्तव्या स्वगृहप्रापणाय च ॥ ३४१ ॥

शिरळ्गावकरोपाह्वो रक्षादलनिरीक्षकः ।
संयमी समयज्ञश्च स्वाधिकारक्रियापटुः ॥ ३४२ ॥

निवासिनो ये सुरते मण्डपे कलहोत्सुकाः ।
दृष्टास्ताननयद् युक्त्या बहिः शीघ्रं सभागृहात् ॥ ३४३ ॥

तिलकः प्रार्थितस्तेन समित्रश्च गतो बहिः ।
कालं कमपि तस्थौ स तदानीं पटसद्मनि ॥ ३४४ ॥

केचिद् निरोधिता मुख्या महाराष्ट्रसभासदः ।
रक्षाधिकारिणा तत्र तन्नामानि ब्रवीम्यहम् ॥ ३४५ ॥

गोखले नागपूरस्थो वाकील उदयोन्मुखः ।
कौजलगिरपि विख्यातो वाकीलेषु विजापुरे ॥ ३४६ ॥

उच्चन्यायालये कर्ट्टिरधिवक्तेति गण्यते ।
देशपांडे पुणेवासी घारपूरे च बुद्धिमान् ॥ ३४७ ॥

अन्येऽपि बहवस्तत्र रक्षामुख्यनिरोधिताः ।
न हि तेषां ग्रामनाम्नामुल्लेखो लभ्यते मया ॥ ३४८ ॥

विमुक्ता अल्पकालेन सर्वेऽप्येतेऽधिकारिणा ।
कौजल्गी देशपांडे च रुधिराक्तौ बभूवतुः ॥ ३४९ ॥

स्वल्पं सुसाध्यमेवासीत् तद्दण्डाघातजं क्षतम् ।
शिबिरं स्वं गताः सर्वे मण्डपाद् बहिरागताः ॥ ३५० ॥

कलहो ह्यभवच्च शान्तो नासावुग्रतरोऽभवत् ।
मण्डपे कारणं तस्य दाक्षिण्यमधिकारिणः ॥ ३५१ ॥

नरसिंहमतस्यायं सारांशो लिखितो मया ।
लिखितं तेन यद् दृष्टं न्यायपूर्वं विवेकिना ॥ ३५२ ॥

तापीतीरे समारब्धो फिरोजाध्वर्यवे मखः ।
देशभक्तावमानाद् वै तत्संतापोत्थिताग्निना ॥ ३५३ ॥

ध्वस्तोऽकारि यथा दक्षमखो रुद्रानुयायिभिः ।
पुराकल्पेऽपमानाद् वै सत्याः क्रोधोत्थवह्निभिः ॥ ३५४ ॥

मिलितास्तद्दिने सायं नवपक्षानुयायिनः ।
अरविन्दो महायोगी तदाध्यक्षपदे स्थितः ॥ ३५५ ॥

तिलको बोधयामास स्वव्याख्याने नवोदिताम् ।
सभाध्वंसेन गम्भीरां राष्ट्रकार्यपरिस्थितिम् ॥ ३५६ ॥

जाता व्यर्थाः प्रयत्नाश्च साममार्गेण पक्षयोः ।
ऐक्यस्य परिपोषाय मनो मे व्यथितं बहु ॥ ३५७ ॥

तथापि न निराशोऽहं क्रियतां पुनरुद्यमः ।
ऐक्यार्थं समितिं ह्येकां स्थापयित्वा सभासदाम् ॥ ३५८ ॥

समाप्तं च सभाकार्यं स्थापनेन सभासदाम् ।
समित्या नवपक्षस्य सभायां मन्दवासरे ॥ ३५९ ॥

विनिश्चितं शुक्ररात्रौ मेथावाच्छानुयायिभिः ।
नेमस्तानां केवलानां सभां कर्तुं परेऽहनि ॥ ३६० ॥

प्रथमं स्वाक्षरीं कुर्यात् सभां जिगमिषुर्जनः ।
संमताः पत्रनिर्दिष्टा निर्बन्धा अखिला मम ॥ ३६१ ॥

प्रदत्तवचनस्यैव प्रवेशः स्यात् सभास्थले ।
सभायास्तैरुपायेन नवपक्षो बहिष्कृतः ॥ ३६२ ॥

नेमस्तानां मेलनं तज् जातमेकदिनात्मकम् ।
स्थाने राष्ट्रसभायाश्च यथाविधि विनिश्चितम् ॥ ३६३ ॥

पक्षयोरुभयोर्मुख्यैः पत्रके द्वे प्रकाशिते ।
समर्थिता कृतिस्तत्र स्वपक्षस्यैव लेखकैः ॥ ३६४ ॥

अशक्यं सहकार्यं च तिलकस्यानुयायिभिः ।
तेषां मार्गोऽपि भिन्नः स्याद् गच्छामः स्वपथेन वै ॥ ३६५ ॥

इदं नेमस्तकार्यस्य पद्धतेः सूत्रमादिमम् ।
न हि तेषां वयं केऽपि नास्माकं केऽपि ते तथा ॥ ३६६ ॥

भयग्रस्ता प्रेमशून्या राष्ट्रबन्धुत्वनाशिनी ।
नीतिर्वै स्वीकृता देशनायकैर्हन्त भारते ॥ ३६७ ॥

राष्ट्रैक्यवर्धिनी नीती राष्ट्रपक्षपुरस्कृता ।
स्वपक्षस्य सभायां या तिलकेन विवेचिता ॥ ३६८ ॥

नौरोजीसंमतास्माकं चतुःसूत्री हितप्रदा ।
न त्याज्येत्याग्रहोऽस्माकं स्वराज्योपासकैः सदा ॥ ३६९ ॥

नेमस्तनवपक्षीयैः संहत्यैव पुरा कृतः ।
सभायां निर्णयः ख्याते कालिकत्ताधिवेशने ॥ ३७० ॥

स्थिराः प्रगतिशीलाः स्युर्भवन्तो नवपक्षिभिः ।
नेमस्तेभ्यः स्वबन्धुभ्यः विज्ञप्तिः सादरं कृता ॥ ३७१ ॥

घोषणेनैव भेदस्य सुरते राष्ट्रनेतृभिः ।
वक्ष्ये ग्रन्थेऽहमुत्पन्नां सङ्कटानां परंपराम् ॥ ३७२ ॥

अहो ध्वस्तो यागः सुरतनगरे दक्षपुरुषैः
समारब्धो मोहात् तिलकजनरोषाच्च सकलैः ।
मखोऽसौ दृप्तानामहह विफलः श्रोत्रियगुरुं
तिरस्कृत्य श्रेष्ठं भुवनतिलकं देवयजने ॥ ३७३ ॥

कृत्वा व्यस्ताग्रयोः स्वे विपुलतमदृढे हस्तयोः पाशबन्धं
वक्षस्यन्वीक्षमाणं तिलकमरिगणं मित्रवर्गं च तुल्यम् ।
अध्यक्षैर्वार्यमाणं कटुवचनशतैर्निन्दितं वक्तुकामं
वन्दे तं धैर्यमेरुं स्थिरतममनसं निश्चयस्यावतारम् ॥ ३७४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे वङ्गभङ्गोपपर्वणि सुरतराष्ट्रसभामखध्वंसो नाम पञ्चत्रिंशस्तरङ्गः ।

# षट्त्रिंशस्तरङ्गः

सुरते राष्ट्रनौकाया भङ्गेन व्यथितो हृदि ।
सततं चिन्तयामास तिलकः सन्धिसाधनम् ।। १ ।।

पारतन्त्र्यामयस्यैकमैक्यमेवास्ति भेषजम् ।
पथ्यं कृत्वापि सेव्यं तत् तिलकस्य मतं स्थिरम् ।। २ ।।

विदर्भवङ्गपंजाबप्रदेशस्थजनैः सह ।
सहयोगं समुत्पन्नं महाराष्ट्रनिवासिनाम् ।। ३ ।।

यतितव्यं दृढीकर्तुं नवपक्षाभिमानिभिः ।
दुर्गं तं प्रतिपक्षीयप्रहारेभ्यः स्वरक्षकम् ।। ४ ।।

आगन्तुं नगरं पुण्यमरविन्दो निमन्त्रितः ।
योगी क्रान्तिपुरस्कर्ता तिलकेनोक्तहेतुना ।। ५ ।।

सत्कारस्य समारम्भः कृतो वङ्गीयबन्धुभिः ।
बालस्य वरमित्रस्य ग्रन्थेऽस्मिन् वर्णितः पुरा ।। ६ ।।

अपूजयन् पुण्यपुर्यामरविन्दं जनास्तथा ।
वन्दे मातरमित्यूचुर्दृष्ट्वोच्चैस्तं समागतम् ।। ७ ।।

ववौ परिमलस्तस्य विस्तृते भारतेऽखिले ।
तपोविद्यादेशसेवागुणानां मोददायकः ।। ८ ।।

बहुकालं समुत्पन्ना ततो दर्शनलालसा ।
लोकेष्वाबालवृद्धं वै दक्षिणापथवासिषु ।। ९ ।।

अद्भुतं चरितं तस्य योगिनः क्रान्तिदर्शिनः ।
कथये जनबोधाय संक्षेपेण महात्मनः ।। १० ।।

पिता कृष्णधनस्तस्य श्रीमानाङ्ग्लचिकित्सकः ।
तस्यासीद् भारतीयानां सभ्यतायामनादरः ।। ११ ।।

शैशवे प्रेषयामास शिक्षार्थं पुत्रकत्रयम् ।
आङ्ग्लदेशं विनष्टात्मा गौरवैभवमोहितः ॥ १२ ॥

बन्धुत्रयेऽरविन्दोऽसौ लेभे लोकोत्तरं यशः ।
लाटिनाङ्ग्लादिभाषासु नैपुण्यं च विशेषतः ॥ १३ ॥

आयूसीएसपरीक्षां च समुत्तीर्णः स लीलया ।
नागच्छद् वै परीक्षार्थं तुरगारोहणस्य तु ॥ १४ ॥

अरविन्दस्ततः कृत्वा वटोदरनृपाश्रयम् ।
अधिकारिपदं प्राप सयाजीरावमण्डले ॥ १५ ॥

महाविद्यालये स्थानमुपप्राचार्यसंज्ञितम् ।
अलंचकार मेधावी संमान्यं च प्रतिष्ठितम् ॥ १६ ॥

तत्रैव वेदधर्मस्य योगस्य च निरन्तरम् ।
प्रारेभे चिन्तनाभ्यासौ तपस्वी ज्ञानलालसः ॥ १७ ॥

नैर्घृण्यं परकीयाणां पारतन्त्र्यदुरत्ययम् ।
दृष्ट्वा देशस्थितेश्चित्ते विचारश्च समुत्थितः ॥ १८ ॥

पारतन्त्र्यतिरस्कारो द्वेषश्चाङ्ग्लाधिकारिणाम् ।
वङ्गभङ्गेन लोकानां हृदये समुपस्थितः ॥ १९ ॥

इति दृष्ट्वा प्रेरणाभूदरविन्दस्य मानसे ।
समयो वङ्गरक्षार्थं गमनस्य समागतः ॥ २० ॥

संप्रतस्थेऽधिकारस्य पदं त्यक्त्वा यथाविधि ।
वङ्गभूदुःखनाशाय कालीनगरमञ्जसा ॥ २१ ॥

वन्देमातरमित्येकमाङ्ग्लभाषिकदैनिकम् ।
प्रबोधनाय लोकानां चालयामास योगवित् ॥ २२ ॥

प्रशंसा तस्य लेखानां कालेऽल्पे सर्वतोमुखी ।
भारतस्य प्रदेशेषु जातासेतुहिमाचलम् ॥ २३ ॥

अयं द्रष्टा क्रान्तिदर्शी पारतन्त्र्याद् विमुक्तये ।
प्रेषितो भारते देवैरिति सर्वैश्च श्रद्धितम् ॥ २४ ॥

बारीन्द्रोऽवरजस्तस्य पूज्यां भारतमातरम् ।
सेवितुं क्रान्तिवीराणां निर्ममे वै बृहद्दलम् ॥ २५ ॥

वैभवोन्मादमत्तानामाङ्ग्लवंशाधिकारिणाम् ।
हिंसामार्गं समाश्रित्य स नाशायोद्यतोऽभवत् ॥ २६ ॥

संप्रदायः क्रान्तिकारी वने सिंह इभानिव ।
निरङ्कुशान् स्रवद्गण्डानुन्मत्तान् स्वैरचारिणः ॥ २७ ॥

पालवाणीप्रवाहोऽसौ ब्रह्मपुत्रोदकोपमः ।
पद्मेव शुचिगम्भीरा सारविन्दसरस्वती ॥ २८ ॥

वङ्गवासीलेखमाला सागरोर्मिनिनादिनी ।
उपाध्यायः पिता तस्या जाह्नवीसागरोपमः ॥ २९ ॥

संप्लाविता वङ्गभूमिर्मेघापद्माब्धिवारिभिः ।
त्रितीर्थसंगमे स्नाताः पुत्रास्तस्या मुमुक्षवः ॥ ३० ॥

कथयिष्ये यथाकालं घोषोत्तरकथां शुभाम् ।
करिष्ये वर्णनं तस्य संचारस्य च संप्रति ॥ ३१ ॥

प्रचाराय कृतस्तेन संचारोऽयमनन्यकः ।
भारते पक्षकार्यार्थमरविन्देन योगिना ॥ ३२ ॥

नेमस्तनीतिसमयः संप्रत्यवसितोऽभवत् ।
अरविन्द इदं प्राह पुण्यपत्तनभाषणे ॥ ३३ ॥

विपक्षः परदेशीयं भारते राज्यशासनम् ।
न तन्निर्मूलनं शक्यं केवलैः सौम्यभाषणैः ॥ ३४ ॥

जनतायाः संहतायां भारतस्य क्रियामयः ।
बहिष्कारस्य निर्धारः सुतरां फलदायकः ॥ ३५ ॥

वर्तन्ते बहवो विघ्ना मार्गे घोरे पदे पदे ।
न दयाक्षमयोः स्थानं हृदये प्रतिपक्षिणः ॥ ३६ ॥

गृहीत इव केशेषु मृत्युना नित्यमेव च ।
इति ज्ञात्वा प्रारभेत संघर्षस्य समुद्यमम् ॥ ३७ ॥

युद्धमेव समारब्धं भारतेनेति निश्चितम् ।
विज्ञातव्यं देशभक्तैः स्वातन्त्र्यध्येयवादिभिः ॥ ३८ ॥

परमेशेच्छया प्राप्तः कालो युद्धस्य संप्रति ।
कर्तव्यमेव सर्वेषां तदाज्ञाप्रतिपालनम् ॥ ३९ ॥

विनाशो जडदेहस्य न तु जीवस्य मृत्युना ।
अमरः परमात्मांशश्चिन्मयः सुस्थिरश्चिरम् ॥ ४० ॥

स्वाधीनता मातृभूमेर्निसर्गेणैव निर्मिता ।
उद्वृत्तैः पिशुनैर्दुष्टैर्नाशिता सा युगे युगे ॥ ४१ ॥

उद्यताः सततं सर्वे प्रतीकारपरायणाः ।
भारतीयाः पुरो यान्तु योद्धुमन्यायदानवम् ॥ ४२ ॥

घोषः प्रचोदयामास नवपक्षानुयायिनः ।
स्वातन्त्र्यार्थं पराकाष्ठा संपाद्या त्यागयत्नयोः ॥ ४३ ॥

विवेकानन्दबोधस्तु प्रोक्तः संक्षेपतो मया ।
तत्त्वं परमहंसस्य तदेवेति जगाद सः ॥ ४४ ॥

नाशिकं सोऽगमद् घोषः पुण्यग्रामादनन्तरम् ।
तपोभूमिं च सिद्धानां महामन्दिरशोभितम् ॥ ४५ ॥

दृष्टो दृष्ट्वोदकस्रोतो गोदावर्याः सुनिर्मलम् ।
रामलक्ष्मणसीतानां स्नानैः पूतमघापहम् ॥ ४६ ॥

विमुक्त्यै दक्षिणाशाया हत्वा रावणसैनिकान् ।
निश्चयः पञ्चवट्यां वै राघवेण पुरा कृतः ॥ ४७ ॥

यूनां प्रक्षुब्धचित्तानां क्रान्तिमार्गानुगामिनाम् ।
नाशिकं केन्द्रमित्युक्तं महाराष्ट्रे विचक्षणैः ॥ ४८ ॥

खरेप्रभृतयो ज्येष्ठा आसन् तन्मार्गदर्शकाः ।
गुप्तक्रान्तिप्रचारेण कार्यं तत्राभवत् बहु ॥ ४९ ॥

त्रयोऽपि देशसेवायै सावर्करसहोदराः ।
परित्यक्तैषणाः क्रान्तेरुत्थानाय प्रयेतिरे ॥ ५० ॥

विनायको नाशिकस्थः क्रान्तिसंस्थाप्रवर्तकः ।
विधिशास्त्रपरीक्षार्थमाङ्ग्लदेशं जगाम वै ॥ ५१ ॥

शिष्यवृत्तिं ददौ वर्मा श्यामकृष्ण उदारधीः ।
सशस्त्रान्दोलनस्यासीदिंग्लंडे यः प्रवर्तकः ॥ ५२ ॥

विनायको गुप्तरीत्या भारते क्रान्तिकारिणाम् ।
प्रेषयामास शस्त्राणि क्रान्तिसंकल्पसिद्धये ॥ ५३ ॥

अरविन्दागमोद्देशः प्रमुखैः क्रान्तिपक्षिभिः ।
सहालापश्च कर्तव्यो नाशिकस्थैर्मतं मम ॥ ५४ ॥

प्रदाय तत्र व्याख्यानं घोषोऽगाद् धूलिकापुरीम् ।
अलंकृतां पताकाभिश्चाम्रपल्लवतोरणैः ॥ ५५ ॥

देवादिभिर्ग्राममुख्यैः पुरद्वारे सुसत्कृतः ।
प्राविशत् खानदेशस्य राजधानीं महामनाः ॥ ५६ ॥

राजवाडेमहोद्योगमैतिह्यस्य विशेषतः ।
वाङ्मन्दिरं समर्थाख्यं पश्यन्नानन्दनिर्भरः ॥ ५७ ॥

श्रद्धां च त्यागवृत्तिं च तापीतीरनिवासिनाम् ।
विदुषां शारदादेव्याः सेवकानां शशंस सः ॥ ५८ ॥

स्वव्याख्याने पुनस्तेन नवपक्षसमर्थनम् ।
कृतं ततः प्रतस्थे स गन्तुं वङ्गभुवं प्रति ॥ ५९ ॥

संचारस्यारविन्दस्य महाराष्ट्रे फलश्रुतिः ।
दार्ढ्यं संघटने जातं मराठावङ्गदेशयोः ॥ ६० ॥

आध्यात्मिकस्वरूपं च तत्त्वानां नवपक्षिणाम् ।
जनैरवगतं सम्यगरविन्दस्य भाषणैः ॥ ६१ ॥

श्रद्धा कार्यक्रमे तेषां चतुःसूत्रीसमन्विते ।
घोषणाभिर्गता वृद्धिं कृताभिर्घोषबाबुना ॥ ६२ ॥

व्याख्यानशैल्या वै मुग्धा ऊचुर्विद्याविभूषिताः ।
अरविन्दस्य रूपेणायातो भूमिं बृहस्पतिः ॥ ६३ ॥

सुरते कलहात् पश्चाद् वङ्गदेशे विवेकिनः ।
राष्ट्रीयकार्यकर्तार एकीभूय व्यचिन्तयन् ॥ ६४ ॥

उपायं राष्ट्रकार्यार्थं पक्षयोरैक्यनिर्मितेः ।
संमेलनं वङ्गभूम्यां सर्वपक्षानुयायिनाम् ॥ ६५ ॥

आन्दोलनप्रवेशाय तथैव च परिस्थितेः ।
विचाराय च लोकेषु भावनोद्दीपनाय च ॥ ६६ ॥

निश्चिता परिषद् वङ्गैः पबनास्थान उत्तमे ।
अग्रणीभिर्वृत्तपत्रे तदर्थं घोषणा कृता ॥ ६७ ॥

ज्ञात्वा परिषदुद्देशमरविन्दस्तदा गतः ।
कलकत्तां महाराष्ट्रसंचारं वै परित्यजन् ॥ ६८ ॥

रवीन्द्रनाथटागोरः कवीन्द्रो विश्ववन्दितः ।
अलंचक्रे पदं श्रेष्ठमध्यक्षस्याधिवेशने ॥ ६९ ॥

भाषणे दर्शयामास वङ्गस्यैक्यमबाधितम् ।
कलकत्तानिर्णयानां वङ्गे सर्वेऽभिमानिनः ॥ ७० ॥

राष्ट्रीयनामको वङ्गेष्वेकः पक्षो हि विद्यते ।
सुरतक्षोभतो नैव वङ्गचित्तं द्विधाभवत् ॥ ७१ ॥

सुरेन्द्रो मोतिलालश्च घोषपाललियाकताः ।
हिन्दुखिस्तिमुसल्माना नौरोजीनिर्णये स्थिराः ॥ ७२ ॥

एकस्थानं समायाता एकपीठाच्च भाषणम् ।
एकाभिप्रायमुद्दिश्य चक्रू राष्ट्रधुरंधराः ॥ ७३ ॥

ऐक्यं प्रदर्शितं तेषां सभायां निर्णयेष्वपि ।
राष्ट्रीयशिक्षास्वाराज्यस्वदेश्यादिविनिर्णयाः ॥ ७४ ॥

संमताः सर्वपक्षाणामासन्नेकमतेन च ।
सामञ्जस्येन सुज्ञैस्तैर्मतभेदो निराकृतः ॥ ७५ ॥

कलकत्तानिर्णयस्य पुनरुक्तिर्यथाक्षरम् ।
पबनायां च संजाता बहिष्कारविनिर्णये ॥ ७६ ॥

विजयस्तिलकस्यायं विजयो लालपालयोः ।
जयोऽरविन्दपक्षस्य राष्ट्रस्वातन्त्र्यवादिनः ॥ ७७ ॥

मालवीय इति ख्यातो नेता मदनमोहनः ।
प्रयागे वै सभां कर्तुं नेमस्तानां मनो दधे ॥ ७८ ॥

संख्या प्रतिनिधीनां च प्रेक्षकाणां लघीयसी ।
प्रवेशार्हो न नेमस्तादन्यः कोऽपि सभागृहे ॥ ७९ ॥

सभानिर्विघ्नतासिद्ध्यै दलं तेन समाहृतम् ।
स्वास्थ्यसंरक्षकं तत्र शासनास्याधिकारिणाम् ॥ ८० ॥

नरसिंहो गतस्तत्र तिलकस्याज्ञया स्वयम् ।
तन्मते न सभाकार्यें लोकानामनुकूलता ॥ ८१ ॥

नेमस्तेष्वपि सभ्यानां न प्रायः संमताभवत् ।
परिषत् सैकपक्षीया केषांचिद् दूरदर्शिनाम् ॥ ८२ ॥

न लोकप्रियतां प्राप नेमस्तानामुपक्रमः ।
एकपक्षसभारूपो मेथावाच्छाप्रचोदितः ॥ ८३ ॥

मार्चमासे पुणेजिल्हासभाया अधिवेशनम् ।
दिनाङ्के विंशतितमे तत्र मुख्यो विनायकः ॥ ८४ ॥

स्वागतातिथ्यकार्यस्य पटवर्धनसंज्ञकः ।
जोशीवंश्यो गणेशोऽभूदध्यक्षपदधारकः ॥ ८५ ॥

सुजनाः सर्वपक्षाणां सभामेतामुपस्थिताः ।
नेमस्ता भाषणं चक्रुश्चर्चायामधिवेशने ॥ ८६ ॥

कानिट्करो देवधरो द्रविडः पटवर्धनः ।
तारकुंडे आपटे च गोपालस्यानुयायिनः ॥ ८७ ॥

चतुःसूत्रीति विख्यातं प्रस्तावानां चतुष्टयम् ।
सभायाः संमतं ह्यासीदूहापोहादनन्तरम् ॥ ८८ ॥

मद्यपाननिषेधार्थप्रस्तावस्य सभागृहे ।
सभासद्भिः कृतो वादः सोत्साहं हृदयंगमः ॥ ८९ ॥

समर्थनाय तिलकः प्रस्तावस्य यदब्रवीत् ।
बीजं जातं च तद् भाविप्रतिबन्धोद्यमस्य च ॥ ९० ॥

निरोधनोद्यमस्यासीत् कथा श्रुतिमनोहरा ।
संक्षेपेण च वक्ष्ये तां सदाचारप्रवर्तिताम् ॥ ९१ ॥

यशस्वी तिलको जात आनेतुं सर्वपक्षिणः ।
मद्यपाननिषेधार्थमेकस्मिन् वक्तृमञ्चके ॥ ९२ ॥

शंकरो ब्राह्मणो लोकसेवायां निरतः सदा ।
लघाटेकुलसंभूतः शुद्धशीलः प्रचारकः ॥ ९३ ॥

आसीत् प्रयत्नशीलः स मद्यपानात् पराङ्मुखान् ।
कर्तुं व्यसनिनो भ्रष्टान् पुण्यपुर्यां निवासिनः ॥ ९४ ॥

ऐशवीयशके वर्षे मुनिखग्रहभूमिते ।
तिलकोऽस्थापयत् संस्थां सुरापाननिषेधिनीम् ॥ ९५ ॥

शंकरस्य प्रयत्नेन सभाकार्येषु संमतिः ।
संप्राप्ता सर्वपक्षीयनेतॄणां पुण्यवासिनाम् ॥ ९६ ॥

गोपालो गोखले ह्येकः लक्ष्मणस्तन्मतानुगः ।
केळ्करस्तिलकश्चापि धार्मिको म्याकनीकलः ॥ ९७ ॥

कृषितज्ज्ञश्च मानाख्य आसन् तस्याः सभासदः ।
दृष्टः सुपरिणामोऽपि सौम्योपायैः सभाकृतैः ॥ ९८ ॥

तदा लोकेषु संचारं कृत्वासौ कार्यवाहकः ।
उपादिशच्च शंकरस्तान् मद्यपाननिवर्तनम् ॥ ९९ ॥

चित्रदीपस्य साह्येन दर्शयामास खेटकान् ।
सुरासेवनसंभाव्याननर्थान् हानिकारकान् ॥ १०० ॥

व्यसनाद् वै परावृत्ताः केचिल्लोकाः स्थले स्थले ।
खेडग्रामे तु सकला जाताः पानपराङ्मुखाः ॥ १०१ ॥

अशक्यं ग्राहकाभावे क्रयपीठस्य चालनम् ।
नित्यं तत् पिहितद्वारं व्यापारेण विना स्थितम् ॥ १०२ ॥

संघः स्वयंसैनिकानां पुण्यग्रामे विनिर्मितः ।
तरुणैर्भावनोद्दीप्तैर्निरोधं च चिकीर्षुभिः ॥ १०३ ॥

सैनिकैः क्रयपीठेषु समारब्धं निरोधनम् ।
स्वयंस्फूर्त्यैव कार्यस्य निष्ठया शान्तवृत्तिभिः ॥ १०४ ॥

सुरा मा पिब बन्धो त्वं निवर्तस्व गृहं सखे ।
एवं ते प्रार्थयन्ते स्म मद्यपानोत्सुकं जनम् ॥ १०५ ॥

मानापमानयोस्तुल्यो निन्दास्तुतिसमानधीः ।
योगीव सैनिकस्तत्र वर्तते स्मेति वर्णितम् ॥ १०६ ॥

निरोधनस्थलं गत्वा कृत्वा सम्यग् निरीक्षणम् ।
म्याकनीकलमानाभ्यां मुक्तकण्ठं कृता स्तुतिः ॥ १०७ ॥

प्रशासनेन ये नीताः सैनिका न्यायमन्दिरम् ।
निर्णीय दोषिण इति न्यायाधीशेन दण्डिताः ॥ १०८ ॥

शताधिकजना एवमेकस्मिन् पुण्यपत्तने ।
न्यायाधीशोक्तदण्डस्य प्रहारेणातिपीडिताः ॥ १०९ ॥

अन्वकुर्वन् पुणेग्रामं नगराणीतराण्यपि ।
महाराष्ट्रे तेन चित्तं क्षुब्धं सर्वाधिकारिणाम् ॥ ११० ॥

कठोरदण्डतापेन क्रमादान्दोलनं ह्यगात् ।
तीव्रवेगाद् मन्दवेगं विरामं च ततः परम् ॥ १११ ॥

स्तब्धमान्दोलनं जातं न तदाश्चर्यकारकम् ।
नियम्यते च कालेन हठयोगप्रदर्शनम् ॥ ११२ ॥

निरोधनादियोगानां न नैरन्तर्यसंभवः ।
वैशिष्ट्योपाधियुक्तानां नैमित्तिकविधानवत् ॥ ११३ ॥

शक्तिद्रव्यव्ययो यस्मिन् विशेषेण विधीयते ।
अन्तस्तत्कर्मणोऽवश्यः कालरूपो विवक्षितः ॥ ११४ ॥

निरोधनविरोधस्तु शासनेन तदा कृतः ।
ज्ञातॄणां राजधर्मस्य मतेनाश्चर्यकारकः ॥ ११५ ॥

को दोषः सैनिकस्यास्ति शान्तिमार्गेण गच्छतः ।
मद्यपानां प्रार्थनायां सुरापानस्थलेष्वपि ॥ ११६ ॥

न कर्तव्यं सुरापानं सर्वानर्थाधिमूलकम् ।
आशु त्यज सुरापात्रं गृहं गच्छ सखे मम ॥ ११७ ॥

एतन्नैतिककर्तव्यं सुजनस्य विशेषतः ।
आदेष्टव्यश्च सन्मार्गो मार्गभ्रष्टस्य सर्वदा ॥ ११८ ॥

शान्तिव्रताद् न ते भ्रष्टाः सैनिकाः कटुभाषणैः ।
प्रहारैर्वापि मत्तानां मद्यपानां निरोधने ॥ ११९ ॥

पैठणस्थैकनाथस्य महाभागवतस्य वै ।
अनुचक्रुः सेवकास्ते स्थितप्रज्ञक्षमाव्रतम् ॥ १२० ॥

न्यायालयकृताद् दण्डात् तेषां जातं च खण्डनम् ।
मद्यायोगप्रचारार्थं व्याख्यानस्याधिकारिणाम् ॥ १२१ ॥

सुरापाननिवृत्त्यर्थं मद्यायोगस्य निर्मितिः ।
नियन्त्रणेन मद्यानां क्रमान्निष्पद्यते हि सा ॥ १२२ ॥

समुद्यमः शासनस्य कर्तुं नीतिमतीं प्रजाम् ।
सद्धेतुभिः समारब्धो मादकानां नियन्त्रणात् ॥ १२३ ॥

मद्यायोगप्रशंसैव कृता तस्याधिकारिभिः ।
निरोधकानां पीडायाः किंतु सा वल्गनाभवत् ॥ १२४ ॥

तदा सभा कृता पुण्यपुरे वै तिलकानुगैः ।
प्रशासनं निषेद्धुं च शंसितुं च निरोधनम् ॥ १२५ ॥

आसीद् वै तत्सभाध्यक्षो विद्वत्कुलशिरोमणिः ।
रामकृष्णः सुविख्यातः सर्वभारतपूजितः ॥ १२६ ॥

सभास्थाने संमिलितः श्रोतृवृन्दोऽयुताधिकः ।
प्रसृतोऽष्टौ दिशो यश्च विस्तृतः सागरोपमः ॥ १२७ ॥

सभादौ पठितं पत्रं गोपाललिखितं तदा ।
प्रशंसितुं सभोद्देशं दर्शितुं चात्मसंमतिम् ॥ १२८ ॥

सभाध्यक्षैर्वेदवाक्याधारेण प्रतिपादितम् ।
सुरापानं समाविष्टं श्रुतौ पातकसप्तके ॥ १२९ ॥

संकल्पश्चेच् शासनस्य न लोको मद्यपी भवेत् ।
निरोधनविरोधेन जायेतैव विसंगतिः ॥ १३० ॥

उक्तिकृत्योरनिष्ठेयं नीतिवर्त्मातिगामिनी ।
न तस्मादुचितं तस्य निरोधनविमर्दनम् ॥ १३१ ॥

मद्यपानप्रबन्धस्य द्रव्यलोभोऽस्ति कारणम् ।
शासनस्येति तिलक उच्चैः प्राह सभास्थले ॥ १३२ ॥

चतुर्लक्षमितं तस्माद् द्रव्यं नगरपालिका ।
समाप्नोति महायासाद् वार्षिकं पुण्यपत्तने ॥ १३३ ॥

सप्तलक्षमिता प्राप्तिः शासनस्येह वर्तते ।
प्रतिवर्षं मद्यपेभ्यो मादकानां तु विक्रयात् ॥ १३४ ॥

समाजो व्यसनग्रस्तो दरिद्रो व्याधिपीडितः ।
तदुद्धाराय चावश्यं मद्यपानविमोचनम् ॥ १३५ ॥

निरोधकानां मद्यस्य शासनं संनिवारयेत् ।
विघ्नानुपस्थितान् मार्गे राजधर्मानुसारतः ॥ १३६ ॥

न स्वयं विघ्ननिर्माणं कर्तुं शासनमर्हति ।
दीयतां संमतिः सर्वैः प्रस्तावस्येति सोऽब्रवीत् ॥ १३७ ॥

नैके बभाषिरे सुज्ञाः प्रस्तावमनुमोदितुम् ।
सुधारकाश्च नेमस्ता यवनख्रिस्तहिन्दवः ॥ १३८ ॥

भाषणानां च सर्वेषामन्तेऽध्यक्षोऽब्रवीत् तदा ।
सभासदो यथाशास्त्रं प्रस्तावः सर्वसंमतः ॥ १३९ ॥

प्रशासकाय प्रान्तस्य मतं ज्ञापयितुं तदा ।
स्पष्टं व्यक्तं सभामध्ये नियुक्तं शिष्टमण्डलम् ॥ १४० ॥

पुरस्वराज्यसंस्थायाः सदोनिर्वाचनावधौ ।
जाताः पुरस्कृताः सर्वे तिलकेन यशस्विनः ॥ १४१ ॥

सुधारकैश्च नेमस्तैरेक एव पुरस्कृतः ।
प्रतिस्पर्धिविरोधेन परं सोऽपि पराजितः ॥ १४२ ॥

घटना सुरते याभूत् तया हानिर्न काचन ।
लोकप्रीतेः सानुगस्य तिलकस्य महात्मनः ॥ १४३ ॥

म्याकनीकलश्च टाइम्से ख्रिस्तधर्मप्रचारकः ।
कथयामास लोकेषु बालः सर्वत्र पूज्यते ॥ १४४ ॥

न गोपाले न तत्पक्षे लोकस्यादरभावना ।
स्पष्टं तत् पालिकाया वै निर्वाचननिदर्शनात् ॥ १४५ ॥

वाक्यं प्रमाणं बालस्य लोकानामस्ति सांप्रतम् ।
न केवलं महाराष्ट्रे प्रदेशेष्वितरेष्वपि ॥ १४६ ॥

प्रयागे शुश्रुवुर्लोका लज्पत्रायस्य भाषणम् ।
न परं मालवीयस्य मेधावाच्छाभिमानिनः ॥ १४७ ॥

एतद् दर्शयति स्पष्टं नाभिषिक्तोऽपि भूपतिः ।
प्रजानां तिलको जातो हिन्दुस्थाननिवासिनाम् ॥ १४८ ॥

महाराष्ट्रे वङ्गदेशे पंजाबे च विशेषतः ।
तिलकः पूजितो लोकैः कर्णाटकविदर्भयोः ॥ १४९ ॥

स्वपक्षस्य प्रचाराय दैनिकस्य प्रकाशनम् ।
अत्यवश्यं मराठ्यां वै मुम्बय्यामिति निर्णयः ॥ १५० ॥

फेब्रुवार्यभिधे मासे संघो बालेन निर्मितः ।
उद्देशपत्रिका तस्य मार्चमासे प्रकाशिता ॥ १५१ ॥

तन्मण्डलस्य नामासीत् संघो राष्ट्रप्रकाशकः ।
तस्य संचालका आसन्नष्टौ बालादयश्च ते ॥ १५२ ॥

प्रकाशनं निश्चितं तैस्तदा ‘ राष्ट्रमत ’स्य च ।
सीतारामोऽभवत् तस्य कार्यवाहो बहुश्रुतः ॥ १५३ ॥

मण्डलव्यवहारार्थं कृता वै द्रव्ययोजना ।
संकल्पितो द्रव्यराशिरेकलक्षमितस्तदा ॥ १५४ ॥

चतुःशतविभागेषु स निधिश्च विभाजितः ।
भागस्यैकस्य मूल्यं च पञ्चविंशतिरूप्यकाः ॥ १५५ ॥

राष्ट्रीयत्वप्रसाराय विद्यालयविनिर्मितिः ।
नवपक्षस्य तत्त्वेषु प्रामुख्येन निदर्शिता ॥ १५६ ॥

करवीरे स्थापितं वै राष्ट्रशिक्षणमण्डलम् ।
विजापूरकरैः सद्भी राष्ट्रशिक्षणवादिभिः ॥ १५७ ॥

राष्ट्रकार्यप्रचाराय प्रतिकूलां परिस्थितिम् ।
दृष्ट्वा तत्र महाभागैः संस्थास्थानान्तरं कृतम् ॥ १५८ ॥

तळेगावे समारब्धो राष्ट्रविद्यालयोद्यमः ।
पैसाफंडनिधेर्यत्र काचशाला प्ररोपिता ॥ १५९ ॥

विद्यालयप्रतिष्ठायै चिकीर्षुर्द्रव्यसंचयम् ।
संचाराय महाराष्ट्रे तिलको वै मनो दधे ॥ १६० ॥

वैद्यश्चिन्तामणिर्विद्वान् देशमूखो भिषग्वरः ।
सचिवः सर्वकार्येषु जोशी बालस्य विश्रुतः ॥ १६१ ॥

नेतारो बालमुख्या वै विजापूरकरैः सह ।
निमन्त्रितास्ते ग्रामस्थैः सोलापूरं प्रतस्थिरे ॥ १६२ ॥

पौरैः संपूजिताः शिष्टाः पुष्पस्रग्भिः सचन्दनैः ।
यथोचितद्रव्यदानैः श्रेष्ठिभिर्वारदादिभिः ॥ १६३ ॥

भाषणे तिलकश्चक्रे पुरे तस्मिन् दिनद्वये ।
विषयौ रामदासश्च राष्ट्रशिक्षा ह्यनुक्रमात् ॥ १६४ ॥

साहाय्यस्य तदा श्रुत्वा ददुराश्वासनं जनाः ।
ततो धनिकभूयिष्ठां शिष्टास्ते बारशीं गताः ॥ १६५ ॥

श्रेष्ठातिथिस्वागताय बारशीग्रामवासिनः ।
ग्रामसीमान्तमागत्य तानानर्चुर्महात्मनः ॥ १६६ ॥

विद्यालयसमुन्नत्यै भाषणानन्तरं तदा ।
ददुर्दानानि श्रीमन्तो दानस्याश्वासनानि च ॥ १६७ ॥

संजाता याचनायात्रा शिष्टानां सफला तदा ।
अन्तिमोऽभूत्तन्निमित्तं बालस्यायं समुद्यमः । १६८ ॥

विभक्तेरधिकाराणां यद्विचाराय मण्डलम् ।
शासनेन नियुक्तं तत् पप्रच्छ तिलकं प्रति ॥ १६९ ॥

विकेन्द्रीकरणस्यास्य युक्ततायुक्ततामतम् ।
स्वतन्त्रसूचनां वापि विषयस्यानुरोधिनीम् । १७० ॥

तिलकः प्रश्नमालाया उत्तराणि लिलेख ह ।
उपस्थातुं सभामस्य मण्डलस्य गतः स्वयम् ॥ १७१ ॥

श्रोतुं साक्ष्यं समायाता बहवश्च बहुश्रुताः ।
मण्डलस्य समीक्षायै स्थानं पूर्वनियोजितम् । १७२ ।

विभक्तेरधिकाराणां व्याप्तिर्या वै प्रतीयते ।
तिलकेन कृतं तस्या मूलगामि समीक्षणम् । १७३ ॥

विभाजनस्य के सन्ति भागिनोऽस्मिन् समीक्षणे ।
प्रतिष्ठिताः स्वाधिकाराः सर्वे श्रेष्ठाधिकारिषु ॥ १७४ ॥

प्रदातुं तदधःस्थेभ्योऽधिकाराणां च निर्णयः ।
तद्विभक्तौ तारतम्यं समितेर्यदि मुख्यतः ॥ १७५ ॥

विषयश्चेच्चिन्तनस्य न तल्लोकस्य तुष्टये ।
न श्रेयसे भवेत् तस्य नवाभ्युदयसिद्धये ॥ १७६ ॥

पात्रे वा तत्स्थिते द्रोणे क्षीरस्य पतनं यथा ।
पात्रस्य स्वामिनोऽन्यस्य नोपयुक्तं कदा भवेत् ॥ १७७ ॥

उक्ताधिकारसंक्रान्तेर्न लोकस्योपयुक्तता ।
परं दुरुपयोगस्य भवेदेव हि संभवः ॥ १७८ ॥

न्यासोऽन्तिमाधिकारस्य न नीचश्रेणिसेवके ।
युक्तः स श्रेष्ठभूमिस्थे ज्ञानवृद्धेऽधिकारिणि ॥ १७९ ॥

स्वभृत्येष्वेव वै यावत् सामर्थ्यान्तरमिष्यते ।
विकेन्द्रीकरणं तावद् न चित्तं मेऽधिरोहति ॥ १८० ॥

राजकीयाधिकाराणां प्रवृत्तिः केन्द्रवर्तिनी ।
नीतिज्ञैः शासनाभिज्ञैर्दोषयुक्तेति मन्यते ॥ १८१ ॥

तस्माद् विभाजनं तेषां करणीयं भवेत्सदा ।
शासनेन जनान् कृत्वा स्वाधिकारेषु भागिनः ॥ १८२ ॥

तस्य क्रमं प्रवक्ष्येऽहं संक्षेपेण च संप्रति ।
ऐतिह्याभ्याससंदृष्टं पण्डितानां च संमतम् ॥ १८३ ॥

दायित्वस्य समुत्पत्तिः स्वजनेषु कथं भवेत् ।
इति चिन्ता शासनेन कर्तव्यैव निरन्तरम् ॥ १८४ ॥

ग्रहणेनाधिकाराणां दायित्वमुपजायते ।
लोकाश्च पात्रतां यान्ति शीलं तेषां च वर्धते ॥ १८५ ॥

सार्वभौमाधिकाराणां मुख्यगौणाविति द्विधा ।
गुणभेदो भवत्येव राजनीतिविदां मते ॥ १८६ ॥

गौणान् केन्द्रात् समाहृत्य दद्याल्लोकाय शासनम् ।
प्रान्तजिल्हाग्रामसंस्था निर्मितव्या यथाक्रमम् ॥ १८७ ॥

लोकप्रतिनिधीनां च सभाद्वारेण शासनम् ।
विकेन्द्रीकरणे मुख्यं साध्नुवन्तु सभासदः ॥ १८८ ॥

अधिकारांशदानेन नृपः साहाय्यमश्नुते ।
संग्रामे व्यसने चैव प्रजाभ्यो वाञ्छितं सदा ॥ १८९ ॥

उपक्रमं स्वराज्यस्य स्थापनस्यैव कारयेत् ।
न्यासेन चाधिकाराणां प्रजासंस्थासु मण्डलम् ॥ १९० ॥

वक्तव्ये तिलकेनोक्तं प्रस्तुतप्रान्तनिर्मितिः ।
वंशसंस्कृतिभाषाणां विचारेण विनाभवत् ॥ १९१ ॥

न विस्तारः कृतस्तेन वक्तव्यस्यास्य कुत्रचित् ।
भाषैकनिकषस्तत्र न तेन प्रतिपादितः ॥ १९२ ॥

बहुभाषासाहचर्यविरोधोऽपि न दर्शितः ।
स्वभाषाणामेकमेव राज्यं तेनापि नोदितम् ॥ १९३ ॥

अमर्यादोऽतिविस्तारः प्रान्तानामभवत् तदा ।
संयुक्तमुम्बईवङ्गमद्रासाणां विशेषतः ॥ १९४ ॥

समुद्दिश्यानवस्थां तां वाक्यं तत्तिलकोऽब्रवीत् ।
विद्यमानैस्तदध्येयं संदर्भमभिलक्ष्य तम् ॥ १९५ ॥

कुर्वन्नेवान्यकर्माणि हितस्फूर्तिप्रदानि च ।
धुळेपरिषदश्चिन्तामुवाह तिलकः सदा ॥ १९६ ॥

जिल्हापरिषदो जातास्तीव्रनेमस्तपक्षयोः ।
सहकार्येण सर्वत्र महाराष्ट्रेऽतिशोभनाः ॥ १९७ ॥

भवेत् तयोः साहचर्यं प्रान्तीयपरिषद्यपि ।
चिन्तामग्नं मनस्तस्याभवदेव निरन्तरम् ॥ १९८ ॥

नेमस्तानामभूदेकं कनव्हेन्शनसंज्ञकम् ।
प्रयागे मेलनं राष्ट्रसभारूपं विनिश्चितुम् ॥ १९९ ॥

मतैस्तैर्बहुभिस्त्यक्तं पक्षयोरैक्यसाधनम् ।
बहिष्कृता च नेमस्तैर्धुळेप्रान्तसभा ततः ॥ २०० ॥

अध्यक्षस्य पदे जोशी सभासद्भिर्नियोजितः ।
बहुश्रुतो वयोवृद्धः पक्षैक्यस्याभिलालसः ॥ २०१ ॥

अलंकृतं यशःपूर्णं सभाध्यक्षपदं पुरा ।
प्रज्ञावता कौशलेन पुण्यपुर्यां विवेकिना ॥ २०२ ॥

संख्याशास्त्रे निपुणता चार्थशास्त्रे प्रवीणता ।
पूर्णता गणितज्ञाने तस्य तज्ज्ञैः समादृताः ॥ २०३ ॥

अखिले भारते जोशी नाम्ना ' जे ' इति विश्रुतः ।
लेखैर्वै मार्मिकैस्तस्य टाइम्स्पत्रे प्रकाशितैः ॥ २०४ ॥

नामूलं लिख्यते किंचिद् न वाधारं विनोच्यते ।
इति संपादिता कीर्तिर्लेखैः स्वैर्जोशिना तदा ॥ २०५ ॥

एप्रिलस्यान्तिमे मासः सप्ताहे तत्सभादिनम् ।
मण्डलेन स्वागतस्य सप्तविंशं विनिश्चितम् ॥ २०६ ॥

कलकत्तापुरे मार्चे परीक्षावसिता मम ।
अवाप्तुं पदवीं बी. एल्.-संज्ञां यत्नः कृतो मया ॥ २०७ ॥

तत्कारणेन नागच्छं सुरतस्याधिवेशनम् ।
पत्रैः प्रकाशितं वृत्तं पठित्वा दर्शनोत्सुकः ॥ २०८ ॥

तिलकस्य गणेशस्य खापर्डेकुलजस्य च ।
मुंजेऽळेकरजोशीनां दुराणीदेशपांडयोः ॥ २०९ ॥

सुरतकृतयात्राणामन्येषां सुहृदामपि ।
अभवं तत्सभावृत्तं तन्मुखाच्छ्रोतुमिच्छुकः ॥ २१० ॥

परीक्षाया निवृत्तः सन्ननुज्ञातो मुखर्जिभिः ।
स्वगृहं गन्तुकामोऽहं वयस्यैश्चानुमोदितः ॥ २११ ॥

विलङ्घ्य हुगळीसेतुं नमस्कृत्य च जाह्नवीम् ।
स्थानकादग्नियानेन प्रागच्छममरावतीम् ॥ २१२ ॥

प्राप्यामरावतीमादौ दादासाहेबमादरात् ।
पितामहं विदर्भाणां खापर्डेकुलदीपकम् ॥ २१३ ॥

ऋषिं दृष्ट्वानमं चाहं पूतं तच्चरणद्वयम् ।
सदाशोत्साहदं शश्वदज्ञबुद्धिप्रचोदकम् ॥ २१४ ॥

प्रथमं कुशलं पृष्ट्वा परीक्षाविषयं ततः ।
चचर्च निर्णये ज्ञातुं विश्वासो यशसो मम ॥ २१५ ॥

अवर्ततथवा नेति मयोक्तं च तदुत्तरम् ।
आशासेऽहं यशःप्राप्तिमाशीर्भिर्वै भवादृशाम् ॥ २१६ ॥

पप्रच्छानन्तरं श्रीमान् मोतीलालस्य दर्शनम् ।
कृतं मया वा पालस्य नवपक्षबृहस्पतेः ॥ २१७ ॥

संतोषं दर्शयामास ज्ञात्वा च कुशलं तयोः ।
निवेदिता विनोदेन सभाभङ्गकथाखिला ॥ २१८ ॥

सायं प्रतिदिनं गन्तुं तत्प्रासादोपमं गृहम् ।
परिपाटिरभूद् यूनां राष्ट्रसेवाभिलाषिणाम् ॥ २१९ ॥

न्यमन्त्रयत नेतारं धुळेपरिषदं प्रति ।
श्रीमन्तं स्वागताध्यक्षो गणेशं तिलकानुगम् ॥ २२० ॥

स्वयं पठित्वा पत्रं तदुवाच, तिलको गुरुः ।
शिरोधार्या तदाज्ञा स्याज्जनानामनुयायिनाम् ॥ २२१ ॥

धुळेसंसद्यशःसिध्द्या अवश्या मदुपस्थितिः ।
आज्ञया तिलकस्येदं प्रामुख्येन निदर्शितम् ॥ २२२ ॥

गन्तास्म्यहं धुळेग्रामं गुरुणाज्ञापितो यतः ।
विचाराणां विनिमयो भवेत्खलु फलप्रदः ॥ २२३ ॥

अहं सदाशिवः श्यामरावोऽसौ वामनस्तथा ।
अनुगन्तुं स्वनेतारं चत्वारोऽपि समुत्सुकाः ॥ २२४ ॥

तथापि न्यायकार्यस्य व्यापृतत्वात्सदाशिवः ।
न प्रस्थितस्तूत्सुकत्वात् त्रय एव वयं गताः ॥ २२५ ॥

नागपूराद् धुण्डिराजः ठेंगडी वै समागतः ।
बड्नेरास्थानकेऽपश्यद् दादामग्निरथस्थितम् ॥ २२६ ॥

गुप्तरक्षादलस्यात्र संभाषा याभवत् तदा ।
श्रुता च मम मित्रेण तां शंसामि समासतः ॥ २२७ ॥

दलस्यैकोऽमरावत्या बड्नेरास्थानमागतः ।
तत्रस्थं सैनिकं दृष्ट्वा गत्वोवाच तदन्तिकम् ॥ २२८ ॥

एकः प्रथमवर्गेऽस्ति त्रयः सन्ति तृतीयके ।
एतान् रथस्थ-'बद्माषान्' संपश्यतु भवानितः ॥ २२९ ॥

वाचकानां सुबोधाय मया किंचिद् निवेद्यते ।
प्रचालिता शासनेन प्रथा स्वातन्त्र्यघातिनी ॥ २३० ॥

आन्दोलनेन वङ्गानां भङ्गादेशविरोधिना ।
प्रशासनमनो ग्रस्तं राष्ट्रद्रोहस्य शङ्कया ॥ २३१ ॥

तेनोपक्रमिता देशे निरीक्षा कार्यकारिणाम् ।
गुप्तरक्षादलद्वारा नवपक्षानुयायिनाम् ॥ २३२ ॥

एते चारा राष्ट्रभक्ताननुगच्छन्ति सर्वदा ।
स्वस्थाने वा प्रवासे वा तान् छायेव दिवानिशम् ॥ २३३ ॥

यथा वै वर्णितं पूर्वं रथस्था गन्तुमिच्छवः ।
चत्वारो ह्यमरावत्या जना एव निदर्शिताः ॥ २३४ ॥

नृशंसं जीवितं यस्य लोकस्वास्थ्यविघातकम् ।
स्वैरिणश्चोर्दुभाषायां बद्माश्रः स उच्यते ॥ २३५ ॥

अयं प्रचलितः शब्दः देशसेवकवाचकः ।
कोशे रक्षादलक्षानवृद्ध्यै विरचिते ननु ॥ २३६ ॥

अकोलास्थानके दादां विदर्भाणां विलोकितुम् ।
याता आहुः पुरीं शीघ्रं तिलकं च समानय ॥ २३७ ॥

आयाति नेता तिलको विदर्भानिति सोऽब्रवीत् ।
दर्शयिष्यति लोकेभ्यो राष्ट्रकार्यदिशं ननु ॥ २३८ ॥

स्थानकेऽमळनेरस्य वयं वै सुहृदस्तदा ।
भास्करोदयपर्यन्तं सुप्ताः सर्वे प्रयत्नतः ॥ २३९ ॥

ठेंगडी ह्यानयच्चैकां प्रवासार्हचतुष्पदीम् ।
तां ददौ सुखनिद्रायै गणेशाय विरागिणे ॥ २४० ॥

स्थानकेऽमळनेरस्य कृत्वा वै वाहनान्तरम् ।
वयं प्राप्ता यथाकालं धुलियास्थानकं प्रति ॥ २४१ ॥

स्वागताय गणेशस्य सभाप्रतिनिधिस्तदा ।
समायातः स्थानकं च तरुणैः सेवकैः सह ॥ २४२ ॥

निवासे सुप्रशस्ते च कस्यापि धनिकस्य च ।
सुखसाधनसंपन्ने श्रीमान् खापरडेऽवसत् ॥ २४३ ॥

सदस्यानां निवासाय स्थानं पूर्वनियोजितम् ।
तत्र त्रयो वयं नीताः सेवकैश्चारुदर्शनैः ॥ २४४ ॥

श्रुत्वा 'तिलक आयात' इति वार्तां मुदान्विताः ।
स्थानकं राजमार्गेण स्वागताय गता वयम् ॥ २४५ ॥

नगरे प्रमुखा रथ्याः पताकाभिरलंकृताः ।
फलपल्लववस्त्राणां तोरणैश्चार्धवर्तुलैः ॥ २४६ ॥

तदानीं तद्रथं चोढुस्तरुणा न चतुष्पदाः ।
गायन्तश्च स्वनेनोच्चै राष्ट्रगीतं सुमङ्गलम् ॥ २४७ ॥

पुरतस्तद्रथस्यासन् गणवेषेण सैनिकाः ।
ऐतिहासिकशौर्यस्य महाराष्ट्रस्य मूर्तयः ॥ २४८ ॥

बाबोपाख्यः खरेसंज्ञः स्वातन्त्र्योत्साहविग्रहः ।
अग्रणीः स्फूर्तिदाता च शुशुभे तेषु तेजसा ॥ २४९ ॥

लेजीमवाद्यतालेन सैनिकानां मनोहरम् ।
नृत्यं च पदविन्यासं कुशलं बाहुचालनम् ॥ २५० ॥

नृत्यतालानुसंवादी श्वासहुंकारयोर्ध्वनिः ।
उल्लासयन्ति मार्गस्थान् पौरजानपदांस्तथा ॥ २५१ ॥

अध्यक्षस्तिलकश्चोभौ समारोहेण पत्तने ।
मुख्येषु ग्राममार्गेषु नीतौ रम्यरथस्थितौ ॥ २५२ ॥

चतुष्पथे तथोद्याने पूजितौ सुमवृष्टिभिः ।
सुवासिनीहस्तदीपैः कृतनीराजनौ मुहुः ॥ २५३ ॥

प्रविष्टौ च गृहं भव्यमेकं लोककृतादरौ ।
विश्रान्त्यै च निवासाय सभासद्भिर्नियोजितम् ॥ २५४ ॥

गीतवादित्रनादैश्च जयघोषैर्मुहुर्मुहुः ।
ध्वनिभिः पूरिता उच्चैः खानदेशे दिशो दश ॥ २५५ ॥

उक्ते दिने परिषद आरब्धमधिवेशनम् ।
अध्यक्षस्य सभास्थाने मण्डितं जोशिभिः पदम् ॥ २५६ ॥

सदस्यैर्यदि नेमस्तैरियं संसद् बहिष्कृता ।
खानदेशस्थनेमस्ताः सभास्थानमुपस्थिताः ॥ २५७ ॥

व्यक्ता च तैर्विवादस्य काले भिन्नमतस्थितिः ।
यशःप्राप्त्यै परिषदः सोत्साहं ते प्रयेतिरे ॥ २५८ ॥

वेङ्कटेशसुतो जोशी गणेशाख्यः स्वभाषणे ।
विषयाभ्याससंपूर्णे विद्वत्त्वप्रचुरेऽब्रवीत् ॥ २५९ ॥

संयुक्ता राष्ट्रिया संसद् भारतस्य हिताय वै ।
आवश्यकी धुरीणैः सा निर्मितव्याञ्जसा पुनः ॥ २६० ॥

प्रस्ताव एतदर्थस्तु तिलकेन पुरस्कृतः ।
सर्वेषां संमतो जात ऐक्यतत्त्वसमर्थकः ॥ २६१ ॥

त्रिभिर्मित्रैर्भाषणानि श्रुतानि ह्यधिवेशने ।
महाराष्ट्रस्थविख्यातवक्तॄणां देशसेविनाम् ॥ २६२ ॥

परांजपेदेशपांडेदेवपाटणकरादयः ।
दृष्टाश्च वृद्धनेतारः पेंडसेदेशमुखादयः ॥ २६३ ॥

एतेषामितरेषां च जातः परिचयो मम ।
शुभस्तत्रैव वक्तॄणां दृढीभूतस्त्वनन्तरम् ॥ २६४ ॥

तिलकेन तदा जातः सहवासो दिनत्रयम् ।
स्फूर्तिदो देशसेवायाः स्वार्थकल्मषनाशनः ॥ २६५ ॥

अन्ते परिषदो जोशी लोकानाह प्रसन्नधीः ।
संपन्नं च महत्कार्यमैक्येनैव सभासदाम् ॥ २६६ ॥

रक्षणीयं च यत्नेन तच्च राष्ट्रहितैषिभिः ।
प्रार्थना देशभक्तेभ्यो मे कृताञ्जलिपूर्वकम् ॥ २६७ ॥

ऐक्यसंपादनार्थाय समितिश्च नियोजिता ।
आस्तां तस्याः कार्यवाहौ वैद्यकेळकरावुभौ ॥ २६८ ॥

समाप्ते वै सभाकार्ये प्रज्ञावन्तः सभाजनाः ।
स्वं स्वं स्थानं न्यवर्तन्त राष्ट्रभक्तिदृढव्रताः ॥ २६९ ॥

शिवाज्युत्सवकार्यार्थमकोलास्थनिमन्त्रणात् ।
विदर्भास्तिलकः प्राप्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २७० ॥

दोलायितो लोकसिन्धुस्तदागमनवार्तया ।
असंख्याः स्थानकं याता जना दर्शनलोलुपाः ॥ २७१ ॥

जनताजाह्नवीपूराप्लावितं वै सभास्थलम् ।
गजाननमहाराजः फड्केक्षेत्रं समाययौ ॥ २७२ ॥

शब्दोऽपि सूचिपातस्य यस्यां श्राव्यो भवेत् खलु ।
तादृशा शान्तता चासीत् तिलके सति वक्तरि ॥ २७३ ॥

प्रतिपाद्य स्वपक्षस्य तत्त्वमुच्चैर्जगाद सः ।
गमिष्यामो वयं पुण्यां राष्ट्रमोक्षपुरीं शनैः ॥ २७४ ॥

न हि विघ्नभयाद् यात्री तीर्थमार्गाद् निवर्तते ।
विजहाति भयं सर्वं श्रद्धयेश्वरनिष्ठया ॥ २७५ ॥

प्रसन्ना सा सभा सर्वा श्रुत्वा स्फूर्तिप्रदं वचः ।
महाराजोऽपि शुश्राव सर्वमेकाग्रचेतसा ॥ २७६ ॥

तिलकोऽगाद् दर्शनार्थं महाराजस्य मन्दिरम् ।
पूजां चक्रे यथाशास्त्रं गणेशेन समन्वितः ॥ २७७ ॥

लोकाग्रहात् खामगावं मल्कापूरं च सोऽगमत् ।
वर्णयामास सर्वत्र नवपक्षमतं शुभम् ॥ २७८ ॥

विना त्यागविरक्तिभ्यां न मोक्षं विन्दते नरः ।
देशस्य परदास्याद् वा जीवस्य भवबन्धनात् ॥ २७९ ॥

बालः समापयामास प्रवासं च ततोऽगमत् ।
पुणेपुरीं विदर्भेण भक्त्या सर्वत्र पूजितः ॥ २८० ॥

आकाशे हि चरन्ति भान्ति बहवो नक्षत्रतारागणाः
सर्वं चञ्चलमेव मण्डलमिदं यद् ब्रह्मणा निर्मितम् ।
सप्तर्षिप्रवराः प्रदक्षिणतया यस्य स्थिताः संमुखं
वन्दे सुस्थिरमुत्तरायणपथे स्थाणूपमं तं ध्रुवम् ॥ २८१ ॥

तद्वत् स्थिरो यो निजकर्मयोगे
प्रज्ञा स्थिरा यस्य च देशभक्ताः ।
यं वर्तुलीभूय सदानुयान्ति
स्वातन्त्र्यभक्तं तिलकं नुमस्तम् ॥ २८२ ॥

संयुक्तराष्ट्रीयसभाप्रयत्नः
पक्षद्वयैक्यस्य विनिर्मितिश्च ।
सामर्थ्यसंवर्धनमार्ग एष
स्वाधीनतावाप्तिफलप्रदश्च ॥ २८३ ॥

तिलकमतमिदं प्रशस्तं
सकलजनहितं सुबोधम् ।

अनुसरति जनः प्रभावि
भवति भरतवर्षमित्रम् ॥ २८४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे संयुक्तराष्ट्रीयसभोद्योगनामा षट्त्रिंशस्तरङ्गः ।

## सप्तत्रिंशस्तरङ्गः

किंग्ज़फर्डाख्यो ब्रिटिशकुलजो न्यायदण्डाधिकारी
लोकस्यागादनयनिपुणो द्वेष्यतां मागधेषु ।
हन्तुं तं ये ब्रिटिशरिपवो क्रान्तिमार्गप्रविष्टाः
शस्त्राभ्यासप्रगतिपटवो निश्चयं चक्रिरे ते ।। १ ।।

प्रक्षेपितं घातकगोलमेकं
मूझफ्फराख्ये नगरे वधाय ।
स्पृष्ट्वा न तं स्त्रीयुगलं जघान
केनेडिपत्नीं च तदीयपुत्रीम् ।। २ ।।

बाँबस्फोटः क्रान्तिहिंसाहवस्य
प्रारम्भोऽयं वङ्गदेशेषु जातः ।
इंग्लंदस्थाः क्षुब्धचित्ता बभूवुः
श्रुत्वा वार्तां मन्त्रिणो भीषणां ताम् ।। ३ ।।

प्रवृत्तौ च खुदीरामप्रफुल्लौ युवकावुभौ ।
साहसेऽस्मिन् तयोरेकः खुदीरामो निरोधितः ।। ४ ।।

प्रफुल्लो विफलीकर्तुं प्रशासननिरोधनम् ।
मुक्त्यर्थमात्मवान् यत्नं चकार दृढनिश्चयः ।। ५ ।।

स्फोटकानां यथागारे स्फुलिङ्गपतनं भवेत् ।
कारणं सर्वनाशस्यानर्थकं च भयावहम् ।। ६ ।।

सर्वेथानघकेनेडीमहिलाद्वयमृत्युना ।
वह्निगोलकविस्फोटनिमित्तेन च भीषणः ।। ७ ।।

प्रज्वालितः शासनस्य क्रोधज्वालामुखो नगः ।
भस्मसादखिलां कर्तुं तथा राष्ट्रीयभावनाम् ।। ८ ।।

वङ्गभङ्गविरोधेन पूर्वं संतप्तमानसाः ।
स्फोटादनन्तरं जाता दौरात्म्यभ्रष्टबुद्धयः ॥ ९ ॥

रक्षाविभागनेतॄणामादेशेन निरोधिताः ।
वने माणिकतोलाख्ये युवका एकविंशतिः ॥ १० ॥

घोषोऽरविन्दो योगी स नीतः कारागृहं तदा ।
अपराधसमीक्षायै न्यायेशेन यथाविधि ॥ ११ ॥

संध्या युगान्तरं वन्देमातरं चान्यपत्रिकाः ।
प्रवर्तितानि पत्राणि वङ्गेषु क्रान्तिहेतुना ॥ १२ ॥

संपादकाश्च सर्वेषां राजद्रोहापराधिनः ।
इति स्वनिर्णयं कृत्वा न्यायाधीशेन दण्डिताः ॥ १३ ॥

गतास्ते बन्धनागारं द्विवारमपि लेखकाः ।
न निवृत्ताः स्वकर्तव्यात् क्लेशप्राणभयादपि ॥ १४ ॥

शिक्षाया घोररूपत्वं कारावासश्च सश्रमः ।
प्रदीर्घकालपर्यन्तं निरयोपमकष्टदः ॥ १५ ॥

नीतिर्द्रविडदेशेऽपि राष्ट्रभक्तिविरोधिनी ।
अविलम्बेन संतप्तैः शासकैरवलम्बिता ॥ १६ ॥

पिल्ले चिदम्बराख्योऽसौ सुब्रह्मण्यः शिवस्तथा ।
राजद्रोहाभियोगान्ते न्यायाधीशेन दण्डितौ ॥ १७ ॥

कारावासेन षट्वर्षपर्यन्तं मन्युरूपिणा ।
स्वाधिकारमदोन्मत्तविलुप्तन्यायदृष्टिना ॥ १८ ॥

पञ्चवर्षावधिः कालः कारावासस्य निश्चितः ।
दोषिणः श्रीनिवासस्य न्यायकार्याधिकारिणा ॥ १९ ॥

विदर्भेषु शिवानन्दो गीतकर्ता च गायकः ।
राजद्रोहापराधीति वर्षषट्कावधिं गतः ॥ २० ॥

संतापदं श्रमोपेतं कारावासं सुदुःसहम् ।
नीतो येन तदा कालो भगवद्गुणवर्णने ॥ २१ ॥

विदर्भेषूग्रदण्डस्य शासकेन प्रवर्तनम् ।
तावत् कृतं महाराष्ट्रे यावदुग्रं च निष्ठुरम् ॥ २२ ॥

हिन्दस्वराज्यपत्रं च विहारी अरुणोदयः ।
दण्डस्य विषया जाताः शासनस्य मुहुर्मुहुः ॥ २३ ॥

काळपत्रे कृता चर्चा शिवरामेण धीमता ।
परांजपेवंशजेन महादेवस्य सूनुना ॥ २४ ॥

राज्यक्रान्तिपथप्राप्ततरुणानां मनःस्थितेः ।
विश्लेषणमलंकारप्रचुरे तेन लेखने ॥ २५ ॥

तिलकः स्वगृहं प्राप्तो विदर्भेभ्यो यदा स्थितिः ।
भारते सर्वनेतॄणां मनःस्वास्थ्यविघातिनी ॥ २६ ॥

भारतस्थाङ्ग्लपत्रेषु तथा चेंग्लंदवर्तिषु ।
विद्यते मुम्बईप्रान्ते बॉम्बस्फोटस्य कारणम् ॥ २७ ॥

इति प्रपादितं दुष्टैस्तिलकस्य विरोधिभिः ।
तत्खण्डनाय लेखानां माला चासीत् प्रकाशिता ॥ २८ ॥

बॉम्बस्फोटस्य मीमांसा कृता केसरिलेखकैः ।
न तत्रैव नवं किंचित् पुनरुक्तिस्तु केवला ॥ २९ ॥

पाश्चात्त्यैर्लिखितं यद् वै तत्त्वज्ञैर्विश्वसंमतैः ।
राजनीतिधुरीणैश्च शिष्टपत्रेषु लेखकैः ॥ ३० ॥

लिलेख केसरीपत्रे लेखकस्तत्समासतः ।
स्वभाषायां सुबोधाय लोकानां चाधिकारिणाम् ॥ ३१ ॥

मानवानां स्वभावस्य सादृश्यं वर्तते सदा ।
सङ्कटप्रतिषेधाय न पर्याप्तं जुगुप्सितम् ॥ ३२ ॥

समानानां कारणानां संघस्यावश्यकी भवेत् ।
कार्ये संक्रमणात् तेषां परिणामसमानता ॥ ३३ ॥

अनिष्टस्य च कार्यस्यासंभवाय विलोपनम् ।
कारणानां तदुत्पत्तेरेकमेवास्ति साधनम् ॥ ३४ ॥

स्वातन्त्र्यध्येयवादित्वबीजमुप्तं दृढं हृदि ।
तरुणानां महाराष्ट्रे पुण्यपुर्यां विशेषतः ॥ ३५ ॥

लेखैः काळाख्यपत्रस्य प्रगल्भप्रतिभावतः ।
शिवरामस्य लालित्यवक्रोक्तिनिपुणस्य च ॥ ३६ ॥

एकादशदिनाङ्के च जूनमासे परांजपे ।
समाप्नोद् बन्धनादेशम् दण्डन्यायाधिकारिणः ॥ ३७ ॥

निबद्धो बन्धनागारे मुम्बापुर्यामुवास सः ।
तिलको द्रष्टुकामोऽभूत् सुहृदं सङ्कटे स्थितम् ॥ ३८ ॥

न्यायालये समीक्षायां स्वरक्षायै व्यवस्थितम् ।
साहाय्यस्य च संप्राप्त्यै कर्तुं संयोजनामपि ॥ ३९ ॥

तिलकं स्थानके पुण्ये जनः कोऽपि तदन्तिकम् ।
यात्वावदद् न गतव्यमद्य मुम्बापुरीं प्रति ॥ ४० ॥

आदेशस्त्वद्बन्धनस्य ह्यधिकारिप्रवर्तितः ।
करणीया गृहं गत्वा व्यवस्थात्महिताय च ॥ ४१ ॥

प्रवेशो वृत्तपत्रस्य समुद्योगे यदा कृतः ।
कारागारे तदैवैकमस्माभिर्निहितं पदम् ॥ ४२ ॥

एवमुक्त्वाविशद् बाष्परथं मुम्बापुरीं प्रति ।
समित्रस्तिलको गन्तुं सुहृत्त्राणपरायणः ॥ ४३ ॥

न्यवसत् तत्र सप्ताहं शिवरामः परांजपे ।
प्रदानेन प्रतिभुवोर्विंशेऽहनि विमोचितः ॥ ४४ ॥

तिलकस्य निवासोऽभूत् सरदारगृहे तदा ।
जूनमासे चतुर्विंशे दिने सायमुपस्थिताः ॥ ४५ ॥

रक्षाभृत्याः समादिष्टा बन्धनायाधिकारिणा ।
उवाच तिलकस्तांश्च सस्मितं च सहेतुकम् ॥ ४६ ॥

किं कारणं विलम्बस्य स्थितं मां संनिधिस्थले ।
आनेतुं बन्धनादेशं युष्मन्मुख्यसमीरितम् ॥ ४७ ॥

अनुक्त्वा किंचिदपि ते निन्युस्तं बन्धनालयम् ।
समीक्षासमये यत्र निवसन्ति स्म शङ्किताः ॥ ४८ ॥

प्रेषितो बन्धनादेशः केसरीमुद्रणालयम् ।
बद्धुं मराठापत्रस्य लेखकं च प्रकाशकम् ॥ ४९ ॥

इति ज्ञात्वा केळकरो धोंडोपंतः प्रकाशकः ।
प्रतीक्षन्तौ तमादेशं तस्थतुः केसरीगृहे ॥ ५० ॥

आयातः स्वल्पकालेन सुरक्षासैनिकैः सह ।
अधिकारी धृतादेशः केसरीमुद्रणालयम् ॥ ५१ ॥

उभाभ्यां दर्शयामास न्यायेशादेशपत्रकम् ।
निरीक्षितुं वै तिलकगृहकार्यालयौ तदा ॥ ५२ ॥

लिखितानि निरीक्ष्यैव मुद्रितान्यखिलानि च ।
नीतानि कानिचित् तेषां पत्रं च तिलकाङ्कितम् ॥ ५३ ॥

नामानि स्फोटकद्रव्यग्रन्थानां तिलकोऽलिखत् ।
पत्रे तस्मिन्निति ज्ञात्वा शासनस्याधिकारिणः ॥ ५४ ॥

जाता सहर्षा मत्वेति सफला नः परिश्रमाः ।
बालापराधसिद्ध्यर्थं संप्राप्तं साधनं महत् ॥ ५५ ॥

कृत्वा सूचिं च वस्तूनां लेखानां च तदा तथा ।
संपूर्णे शोधनोद्योगे जयानन्देन निर्गताः ॥ ५६ ॥

उल्लेखितमिदं स्पष्टं प्रार्थिपत्रे समर्पिते ।
प्रशासनेन प्रथमं न्यायकार्यस्य मण्डले ॥ ५७ ॥

आधारभूतलेखोऽस्ति 'देशदुर्दैव'-शीर्षकः ।
प्रसिद्धः केसरीपत्रे मेमासि द्वादशे दिने ॥ ५८ ॥

संशोधनोपलब्धस्य पत्रस्यानन्तरं पुनः ।
नवापराधसिद्ध्यर्थं जूनस्य नवमेऽहनि ॥ ५९ ॥

'नैते चिरन्तनोपाया' इति लेखः प्रकाशितः ।
मत्वैव दूषणीयं तं समीक्षायै पुरस्कृतः ॥ ६० ॥

तदर्थं बन्धनादेशो पुनस्तेन प्रवर्तितः ।
आदेशो बन्धनागारे तिलकाय प्रदर्शितः ॥ ६१ ॥

पातनं भूशयानस्य यथा गच्छति हास्यताम् ।
हास्यास्पदमभूत् तद्वद् धर्षितस्य प्रधर्षणम् ॥ ६२ ॥

नवविंशे दिने न्यायाधीशः प्रारभताखिलाम् ।
समीक्षां प्रार्थिपत्रस्य विधानानां यथाक्रमम् ॥ ६३ ॥

भास्करो विष्णुतनयो यो जोशीत्युपनामकः ।
साहाय्यकाधिकारस्थः प्राच्यभाषानुवादिनः ॥ ६४ ॥

न्यायालयेऽर्पयामास ह्याङ्ग्लरूपान्तराणि सः ।
केषांचित् केसरीपत्रलेखानां च विनिर्गतः ॥ ६५ ॥

नारायणः समाहूतो मुम्बानगरकेसरी- ।
कार्यकर्ता समागत्य न्यायेशस्य पुरः स्थितः ॥ ६६ ॥

साक्षी कृतप्रतिज्ञः सन् कथयामास केसरी- ।
पत्राङ्कानां वितरणं सर्वमुम्बापुरीकृतम् ॥ ६७ ॥

पप्रच्छ तिलकं प्रश्नान् न्यायेशस्तदनन्तरम् ।
भाषणं कर्तुमिच्छामि नैव संप्रति संसदि ॥ ६८ ॥

न्यायालयान्तरे पश्चात् कथये तत् सविस्तरम् ।
तिलकस्योत्तरं श्रुत्वा न्यायाधीशोऽञ्जसावदत् ॥ ६९ ॥

वरिष्ठन्यायगेहाय प्रेषयिष्यामि सांप्रतम् ।
एतत् प्रकरणं सर्वं यथान्यायं समीक्षितुम् ॥ ७० ॥

आरोपितोऽस्ति तिलको न्यायार्थं च द्विदोषयोः ।
आदिमोऽभूद् नृपद्रोहो जातिद्रोहो द्वितीयकः ॥ ७१ ॥

तिलको बन्धमुक्त्यर्थमर्पयामास पत्रकम् ।
कर्तुं प्रतिभुवावत्र सिद्धोऽहमिति सोऽलिखत् ॥ ७२ ॥

पञ्चविंशे दिने तस्य बोडसो दावरस्तथा ।
अभूतामधिवक्तारौ तदर्थं न्यायमन्दिरे ॥ ७३ ॥

बोडसो माधवाख्योऽयं तिलकस्य सुहृत् प्रियः ।
दावरस्य न्यायमूर्तेः पुत्रोऽन्यो दावराभिधः ॥ ७४ ॥

यदुक्तं प्रार्थनापत्रेऽथवा वाक्कीलभाषणे ।
अकृत्वा तद्विचारं हि न्यायेशो निर्णिनाय वै ॥ ७५ ॥

अयोग्यमिति तत् सर्वं दण्डन्यायपतेर्मतम् ।
काले दोषसमीक्षायास्तिलको न विमोचितः ॥ ७६ ॥

मनोविकृतिदुष्टस्य समाधानसमुद्यमः ।
विद्याप्रज्ञाबलेनापि भवत्येव निरर्थकः ॥ ७७ ॥

दण्डन्यायवरिष्ठस्तु श्रेष्ठन्यायालयस्थितः ।
न्यायमूर्तिपदप्राप्तो दावरो विधिकोविदः ॥ ७८ ॥

पुनश्च प्रार्थनापत्रं बन्धमुक्त्यै समर्पितम् ।
तिलकस्य न्यायमूर्तिं समुद्दिश्य प्रभाविणा ॥ ७९ ॥

अधिवक्त्रा जिनाख्येन द्वितीये जुलईदिने ।
चक्रे तस्य न्यायमूर्तिः प्रतिकूलं तु निर्णयम् ॥ ८० ॥

प्रार्थनापत्रपुष्ट्यर्थं जिना प्राह सयुक्तिकम् ।
समर्पकं प्रमाणं च ददौ दावरभाषणात् ॥ ८१ ॥

पूर्वापत्तौ कृतात् तेन तिलकस्य विमुक्तये ।
आसीद् यदा दावरोऽयमधिवक्ता हितप्रदः ॥ ८२ ॥

दृष्ट्वा मतान्तरं तस्य स्थित्यन्तरसमुद्भवम् ।
' अर्थस्य पुरुषो दासः ' इति भीष्मपितामहः ॥ ८३ ॥

उक्तवान् प्रत्ययस्तस्य मृत्युलोकेऽनुभूयते ।
प्रतिष्ठानं हि सत्यस्य प्रायो द्रव्यवशो जनः ॥ ८४ ॥

जिनासंभाषणान्ते च सुस्पष्टं दावरोऽब्रवीत् ।
प्रशासनस्याधिवक्त्रा न कर्तव्यः परिश्रमः ॥ ८५ ॥

किमप्येवोत्तरं दातुं वचसस्तत्कृतस्य च ।
विचारस्तस्य वाक्यानां संपूर्णोऽत्र मया कृतः ॥ ८६ ॥

वर्तते न समीचीनं तिलकस्य विमोचनम् ।
कारणानामनुल्लेखः समीचीनो भवेत् खलु ॥ ८७ ॥

न्यायमूर्तिर्लिलेखैवं प्रार्थिपत्रविनिर्णये ।
सुज्ञास्तत्सूचकं प्राहुरनर्थस्य च भाविनः ॥ ८८ ॥

अयाचत प्रतिनिधिः शासनस्य परे दिने ।
विशेषन्यायपंचानां कर्तव्येह नियोजना ॥ ८९ ॥

बाप्टिस्टेन कृतस्तस्य विरोधो युक्तिभाषणैः ।
हेतुमद्भिः सप्रमाणं विधिन्यायानुसंमतैः ॥ ९० ॥

यूरोपीयास्तु बहव एतस्मिन् पंचमण्डले ।
न जानन्ति महाराष्ट्रभाषां ते भिन्नभाषिकाः ॥ ९१ ॥

केसरीपत्रलेखानां बोधस्तेषां कथं भवेत् ।
किमन्धानां भवेच्छक्यं वस्तुनो रूपदर्शनम् ॥ ९२ ॥

न्यायपंचकसंस्थायाः समुद्देशः स्वबान्धवैः ।
निर्णीतव्यं स्वदोषस्य स्वरूपमिति विद्यते ॥ ९३ ॥

बाहुल्यादाङ्ग्लपंचानां भवेदेव स निष्फलः ।
मलिने दर्पणे व्यर्थं यथा मुखविलोकनम् ॥ ९४ ॥

अपराधसमीक्षायै योग्यं पुण्यपुरं स्थलम् ।
आक्षेपयोग्यलेखानां पत्रं यत्र प्रकाशितम् ॥ ९५ ॥

प्रथा विशेषपंचानां नैव तत्र प्रवर्तते ।
तन्नियुक्तिरिहाद्यास्ति सर्वथा न्यायमूलिका ॥ ९६ ॥

कृतेऽस्मिन् युक्तिवादेऽपि न्यायमूर्तिः समादिशत् ।
संमतासीत् प्रार्थनेति शासनेन तु या कृता ॥ ९७ ॥

युक्तिवादः कृतः सर्वः संजातो जलताडनम् ।
प्रक्षेपणं हि मुक्तानां वराहपुरतो यथा ॥ ९८ ॥

त्रयोदशे जुलैमासे दिनाङ्के सोमवासरे ।
समीक्षामपराधानां न्यायेश उपचक्रमे ॥ ९९ ॥

निश्चिकाय स्थितप्रज्ञस्तिलकः समचेतसा ।
रक्षायत्नं समीक्षायां स्वयमेव करोम्यहम् ॥ १०० ॥

उद्युज्येत तु रक्षायै नाधिवक्ता न वाक्किलः ।
समीक्षासमये कश्चित् सर्वोच्चन्यायमन्दिरे ॥ १०१ ॥

गणेशनरसिंहाभ्यां करंदीकरशर्मणे ।
बाप्टिस्ट–बोडसादिभ्यः सर्वमेतद् न्यवेदयत् ॥ १०२ ॥

न्यायकार्ये च साह्यार्थं नव पंचा नियोजिताः ।
तेषु द्वौ पारसीकौ च शेषाः सप्ताङ्ग्लभूमिजाः ॥ १०३ ॥

तिलकस्य कथासूत्रे येषां स्थानं चिरंतनम् ।
प्रवक्ष्ये नामधेयानि तेषां न्यायांशभागिनाम् ॥ १०४ ॥

हिलियार्डग्रेगवूडाः पालनूजीदावरौ तथा ।
सोराबशापुरश्चांडरूहडहेंपाः सनोत्तराः ॥ १०५ ॥

अभूदण्डरूसनो मुख्यो न्यायाधीशसमाज्ञया ।
तेषां सामूहिकं नाम ज्यूरीति विधिभाषया ॥ १०६ ॥

आरोपकस्य पक्षस्य ब्रान्सनो मुखरोऽभवत् ।
अधिवक्तेन्व्हरारीटिर्बिनिंगश्च सहायकौ ॥ १०७ ॥

आरोप्यस्तिलकस्तस्थौ स्वरक्षार्थं स्वयं तदा ।
नाध्यक्रियत साह्यार्थमधिवक्तुरुपस्थितिः ॥ १०८ ॥

बालेन वैधदोपोऽयं प्रारम्भे तु प्रदर्शितः ।
असंमतं विधिज्ञानां सहतन्त्रसमीक्षणम् ॥ १०९ ॥

नैकप्रकरणे योग्या समीक्षा न्यायमूर्तिना ।
बहूनां भिन्नलेखेभ्यः समुद्भूतागसामिति ॥ ११० ॥

अपसंयोगदोषोऽयं विधिशास्त्रविगर्हितः ।
तस्मात् कार्या समीक्षा वै दोषाणां हि पृथक् पृथक् ॥ १११ ॥

नैकत्र त्र्यधिका दोषाः समीक्ष्याः न्यायमूर्तिना ।
निर्बन्धोऽयं कृतः स्पष्टं प्रदण्डक्रमपद्धतौ ॥ ११२ ॥

अवैधास्ति समीक्षेयं चतुर्दोषसमन्विता ।
इत्याह तिलकस्तत्र विधिशास्त्रप्रमाणवित् ॥ ११३ ॥

अनुमत्या न्यायमूर्तेः शासनस्याधिकारिणा ।
पूर्वोक्तेभ्योऽपराधेभ्य एक एव विलोपितः ॥ ११४ ॥

द्वितीयाक्षिप्तलेखोत्थौ द्वौ दोषौ च निदर्शितौ ।
निष्कासितः समीक्षाया जातिद्रोहाभिधस्तयोः ॥ ११५ ॥

आरोपपत्रिकां सर्वां पठित्वा तिलकं प्रति ।
पप्रच्छ न्यायमूर्तिस्तं दोषभागसि वा न वा ॥ ११६ ॥

संपृष्टस्तिलकः स्पष्टं ददौ तस्मै तदोत्तरम् ।
नाहं दोषी कृता नैव दोषाः पत्रनिदर्शिताः ॥ ११७ ॥

अभियोगस्य सामान्यमधिवक्तेन्व्हरारिटिः ।
स्वरूपं दर्शयामास कृत्वा स्वल्पनिवेदनम् ॥ ११८ ॥

प्रावर्तत न्यायमूर्तिः साक्षिणां लिखितुं ततः ।
उत्तराणि प्रवदतोः प्रश्नानां न्यायमन्दिरे ॥ ११९ ॥

प्राच्यभाषान्तरपटोर्विद्वान् प्रथमसाह्यकः ।
आयातः प्रथमः साक्षी जोशीवंशजभास्करः ॥ १२० ॥

तिलकप्रतिप्रश्नानामुत्तरेषु च सोऽवदत् ।
दोषाः कतिपयाः सन्ति लेखभाषान्तरेष्विह ॥ १२१ ॥

भाषान्तरोपयुक्ता ये शब्दास्तीव्रार्थदर्शकाः ।
आसन्नन्वर्थकास्तेषामन्ये सौम्यार्थवाचकाः ॥ १२२ ॥

लुप्ता भाषान्तरे शब्दा मूलस्था वै क्वचित् स्थले ।
दोषाः प्रदर्शितास्तेन भाषाऽज्ञानसमुत्थिताः ॥ १२३ ॥

कार्यं भाषान्तरस्येदं निपुणानां हि दुर्घटम् ।
समाजाचारभिन्नत्वादाङ्ग्लभारतवासिनाम् ॥ १२४ ॥

' जगत'स्य जगन्मत्वा मूलवाक्यस्य यत् कृतम् ।
भाषातज्ज्ञेन तत् सर्वं भाषान्तरमनर्थकम् ॥ १२५ ॥

' जगत ' इति भाषायां जीवतीत्यर्थवाचकम् ।
' जग ' धातोर्वर्तमाने रूपं विज्ञातमेव च ॥ १२६ ॥

व्यञ्जनान्तो ' जगत् '-शब्दो ब्रह्मसृष्टिनिदर्शकः ।
तस्य व्याकरणे संज्ञा तज्ज्ञैर्नामेति दीयते ॥ १२७ ॥

भाषान्तरान्नैव शक्यं लेखसत्यार्थबोधनम् ।
ज्यूरीसभासदां भाषानभिज्ञानां विशेषतः ॥ १२८ ॥

एतद् दर्शयितुं सम्यग् जोशीप्रत्तिपरीक्षणम् ।
तिलकेन स्वरक्षायै परिश्रमयुतं कृतम् ॥ १२९ ॥

दातारश्च ततः साक्षी द्वितीयः संपरीक्षितः ।
मुम्बईनगरे ख्याते वृत्तपत्रवितारकः ॥ १३० ॥

कथितं तेन तत् सर्वं प्रश्नानामुत्तरेषु च ।
न तस्य पृष्टवान् प्रश्नं बालः प्रतिपरीक्षणे ॥ १३१ ॥

सुलीव्हनस्तृतीयोऽभूद् रक्षादलनिरीक्षकः ।
साक्ष्यसौ पंचपत्राणां कृतानां शोधकर्मसु ॥ १३२ ॥

तदानीं वै शोधनस्य कथा तेन निवेदिता ।
उवाच पत्रलाभस्य स्थितिं प्रश्नोत्तरेषु सः ॥ १३३ ॥

नामनी ग्रन्थयोस्तत्र स्फोटकद्रव्यदर्शिनोः ।
आस्तां स्वलिखिते पत्रे तिलकस्य महात्मनः ॥ १३४ ॥

न काष्ठभाजनद्वारं तदासीत् पिहितं खलु ।
पत्रं चाधिगतं यस्मिन् पत्रैरन्यैर्निरर्थकैः ॥ १३५ ॥

सिंहदुर्गगृहं तेन बलादुद्घाटितं स्वयम् ।
न पूर्वसूचना दत्ता तिलकाप्तजनं प्रति ॥ १३६ ॥

न पृथग् धर्षणादेशः प्राप्तस्तेनाधिकारिणः ।
तिलकस्य निवासस्य सिंहाख्यगडवर्तिनः ॥ १३७ ॥

उद्घाट्य सदनं तेन चापृष्ट्वा सेवकं तदा ।
सर्वं नियमबाह्यं वै कृतं स्वैराधिकारिणा ॥ १३८ ॥

पूर्वाङ्कान् केसरीवृत्तपत्रस्याशोधने बहून् ।
जग्राह यान् स तान् सर्वांश्चानयद् न्यायमन्दिरम् ॥ १३९ ॥

रक्षिता न्यायकार्यार्थं शासनेन च चिह्निताः ।
नीयन्तामवशिष्टाश्च न्यायमूर्तिः समादिशत् ॥ १४० ॥

पुरस्करोम्यहं सर्वानवदत् तिलकस्तदा ।
ददावनुमतिं तस्मै न्यायसिंहासनप्रभुः ॥ १४१ ॥

उत्तरस्याधिकारस्य प्रश्नस्तु समुपस्थितः ।
स्वरक्षायै प्रदत्तत्वाल्लेखानां प्रतिवादिना ॥ १४२ ॥

हानिस्तदाधिकारस्य स्वीकृता तिलकेन हि ।
आक्षिप्तलेखबोधाय पूर्वलेखानुवाचनम् ॥ १४३ ॥

सम्यग्ज्ञानाय ज्यूरीणां लेखानामाशयस्य च ।
मतमावश्यकं तस्य प्रश्नगाम्भीर्यदर्शिनः ॥ १४४ ॥

प्रशासनस्यावसाने साक्ष्यस्यैव समर्पितम् ।
तिलकेन स्ववक्तव्यं लिखितं न्यायमूर्तये ॥ १४५ ॥

यतोऽहं केसरीपत्रलेखकस्तत्प्रकाशकः ।
ममैवोत्तरदायित्वं तत्र मुद्रितलेखयोः ॥ १४६ ॥

राजनीतिसमस्यानां चर्चाया नूतनप्रथा ।
प्रवर्तिता महाराष्ट्र्यामतः शब्दविनिर्मितेः ॥ १४७ ॥

आवश्यकः संप्रयास इष्टार्थप्रतिपत्तये ।
परिभाषाऽनिश्चितासीदाङ्ग्लसंज्ञार्थदर्शिका ॥ १४८ ॥

लेखयोः केसरीपत्रस्यारोपाधारभूतयोः ।
विद्यते शब्दबाहुल्यमेकार्थप्रतिपादकम् ॥ १४९ ॥

'राज्यकर्ता' च 'गोरा'च 'सरकारेंग्रजा' विति ।
उपयुक्ता मया लेखे पर्याया अधिकारिणः ॥ १५० ॥

असंमतं ममैवास्ति ह्याङ्ग्लरूपान्तरं कृतम् ।
जुलमीत्यादिशब्दानां शासनस्याधिकारिणा ॥ १५१ ॥

निदर्शिता नैकशब्दा उक्तदोषेण दूषिताः ।
दर्शिताश्चाङ्ग्लपर्याया यथार्थस्य च वाचकाः ॥ १५२ ॥

विभक्तिरधिकारस्य प्रोक्ता लेखे स्थले क्वचित् ।
तदर्थस्य विनिश्चित्यै लेख एकः समर्पितः ॥ १५३ ॥

अधिकारविभागार्थं समितिर्या नियोजिता ।
तत्पुरस्तात् कृतं चैकं तिलकेन निवेदनम् ॥ १५४ ॥

तस्यैवांशः समाविष्टः प्रस्तुते स्वनिवेदने ।
न्यायाधीशस्य ज्यूरीणां बोधाय च विशेषतः ॥ १५५ ॥

मगधेषु यदा स्फोटो वह्निगोलस्य चाभवत् ।
तदा समुत्थिता चर्चा वृत्तपत्रेषु भारते ॥ १५६ ॥

विषयाणां चर्चितानां केसरीलेखकोऽकरोत् ।
विचारं भारतीयानां हितमुद्दिश्य सर्वथा ॥ १५७ ॥

आरोपकेण पक्षेण पत्रमेकं प्रदर्शितम् ।
लिखिते च मया यस्मिन् नामनी ग्रन्थयोर्द्वयोः ॥ १५८ ॥

प्रशासनेन देशस्य स्फोटकद्रव्यसंज्ञकः ।
विधिः प्रवर्तितः पूर्वं स्वल्पकालाद् निरर्थकः ॥ १५९ ॥

तद्विधानस्य टीकायां मनो मेऽभूत् प्रवर्तितम् ।
जिज्ञासुरभवं व्याख्यां स्फोटकद्रव्यवस्तुनः ॥ १६० ॥

विलोक्य ग्रन्थसूचिं द्वे नामनी ग्रन्थयोर्द्वयोः ।
पत्रके लिखिते चैव प्रशासननिदर्शिते ॥ १६१ ॥

क्रेतुं तद्विषयग्रन्थान् विचारो मेऽभवत् तदा ।
स्मरणार्थं पत्रके सा कृता टिप्पणिका मया ॥ १६२ ॥

प्रकाशितस्य लेखस्य जूनस्य नवमे दिने ।
उद्देशो मेऽस्त्यतुष्टानां शमोपायस्य शोधनम् ॥ १६३ ॥

असंतुष्टात्मनां घोरदण्डमात्रेण केवलम् ।
भवेदुपशमो नैव मतं नीतिविदां खलु ॥ १६४ ॥

वृत्तपत्रादिलेखानां प्रमाणं दीयते मया ।
अस्मिन् प्रकरणे तद् वै निदधामि हिताय मे ॥ १६५॥

तिलकः कथयामास त्रिवारं न्यायमूर्तये ।
अदोषभाक् च निर्दोषो नापराधकृदस्म्यहम् ॥ १६६ ॥

आरोपिताय बालाय न्यायमूर्तिः समादिशत् ।
यतो नास्त्यधिकारस्ते भाषणस्योत्तरस्य वै ॥ १६७॥

कर्तव्यं भवता पूर्णं निर्दोषत्वसमर्थनम् ।
स्वपक्षप्रबलत्वेन दौर्बल्येन विपक्षिणः ॥ १६८॥

हेतुं सर्वं दर्शयित्वा वैधप्रश्नविवेचनम् ।
अन्यच्च यत् सुसंबद्धमेकस्मिन्नेव भाषणे ॥ १६९ ॥

ओमित्युक्त्वा स्वरक्षार्थं समारभत भाषणम् ।
तिलकस्तच्छब्दनादैर्नादितं न्यायमन्दिरम् ॥ १७० ॥

भाषणं तिलकश्चक्रे वाचा घनगभीरया ।
तदारम्भावसानान्तं व्यतीयाय दिनाष्टकम् ॥ १७१ ॥

संत्यज्य ब्रह्मणो धाम तज्जिह्वाग्रमधिष्ठिता ।
देवी सरस्वतीत्याहुः श्रोतारो विधिकोविदाः ॥ १७२ ॥

सरस्वत्यार्चिता नूनं वाक्पुष्पैर्न्यायदेवता ।
लेखापदो वारणार्थं सप्ताहं न्यायमन्दिरे ॥ १७३ ॥

तिलकः कथयामास सावेशं न्यायमन्दिरे ।
न्यायाधीशाय ज्यूरीस्थसदस्येभ्यो मुहुर्मुहुः ॥ १७४ ॥

लेखभाषणरूपेण विचाराणां प्रवर्तने ।
आवश्यकी मानवानां प्रगत्यर्थं स्वतन्त्रता ॥ १७५ ॥

संमतः शिष्टराष्ट्राणां सिद्धान्तोऽयं सनातनः ।
प्रयत्नान्ते बुद्धिमतां त्यागिनां दूरदर्शिनाम् ॥ १७६ ॥

स्वातन्त्र्यवीरः



विनायकनामा दामोदरसुतः सावरकरः

[ जन्म : २८-५-१८८३ मृत्युः : २६-२-१९६६ ]

# धैर्यमेरुः तिलकः



मुम्बयाः वरिष्ठन्यायालये न्यायमूर्तेः दावरस्य पुः स्वरक्षार्थं भाषमाणः धैर्यमेरुः तिलकः

श्यामजी कृष्ण वर्मा





हरदयालः नागः

अनन्तनामा लक्ष्मणसुतः कान्हेरे महोदयः



लेखा हि केसरीपत्रे महाराष्ट्र्यां प्रकाशिताः ।
न्यायकार्येषु युक्तानां तस्या ज्ञानमपेक्ष्यते ॥ १७७ ॥

महाराष्ट्र्यनभिज्ञस्तु चात्र न्यायासनाधिपः ।
ज्यूरीस्थन्यायपंचाश्च न्यायकर्मनियोजिताः ॥ १७८ ॥

द्विभाषाकोविदैस्तेषामाङ्ग्लभाषान्तरं कृतम् ।
सर्वेषां मम दोषाणां तदाधारस्तु केवलम् ॥ १७९ ॥

अभावात् साधनस्येह विश्वासार्हस्य न क्षमाः ।
यूयं ज्यूरीन्यायपंचाः कर्तुं दोषविनिर्णयम् ॥ १८० ॥

राजद्रोहस्वरूपस्य द्विविधत्वं प्रदर्शितम् ।
दण्डशास्त्रविधानस्य कर्तृभिर्विधिकोविदैः ॥ १८१ ॥

पूर्वे द्वेषसमुत्पत्तिरुत्तरे तत्कृतोद्यमः ।
वर्णितः परिभाषायां प्रयत्न इति सर्वदा ॥ १८२ ॥

विद्यते मम दोषोऽत्र द्वितीयार्धस्वरूपवान् ।
प्रार्थिपक्षमतेनेति सुस्पष्टं दृश्यते मया ॥ १८३ ॥

नैव कोऽपि प्रमाणार्थं द्वेषोत्पत्तेः परीक्षितः ।
साक्षी वा लिखितं किंचिदायोगेऽस्मिन् प्रदर्शितम् ॥ १८४ ॥

नैव तस्माद् विचारार्हो दोषः पूर्वार्धवर्णितः ।
न्यायेशस्य च पंचानां निर्णयोत्तरदायिनाम् ॥ १८५ ॥

प्रयोजनं विना नैव प्रयत्नः कोऽपि विद्यते ।
लोकक्षोभोत्पादनस्य हेतोः सिद्धिरपेक्षिता ॥ १८६ ॥

न केसरीपत्रलेखा भवेयुर्हेतुदर्शकाः ।
प्रत्यक्षादिप्रमाणं च तत्सिद्ध्यर्थमपेक्षितम् ॥ १८७ ॥

न हि साक्ष्ये प्रमाणं तु किंचित् संदृश्यते मया ।
लोकक्षोभोत्पादनस्य लिखिते मौखिकेऽथवा ॥ १८८ ॥

स्वहत्यादोषभाग् न स्याद् विषद्रव्यस्य संग्रहात् ।
तस्याशनप्रयत्नस्य प्रमाणेन विना जनः ॥ १८९ ॥

हेतुज्ञानाय बोद्धव्या वस्तूद्भवपरिस्थितिः ।
श्रूयतां न्यायपंचैमैं लेखयुग्मप्रयोजनम् ॥ १९० ॥

जातेऽग्निगोलकस्फोटे वङ्गभूम्यां भयंकरे ।
उद्भूता वृत्तपत्रेषु चर्चा वै पक्षयोर्द्वयोः ॥ १९१ ॥

प्रशासनमेकपक्षो द्वितीयो भारतप्रजाः ।
पत्राणामाङ्ग्लहिन्दानां शासनस्य प्रचारकाः ॥ १९२ ॥

लेखकाः प्रायशस्तेषामिंग्लंदादागता इह ।
तेभ्यः परे भारतस्य लोकाकाङ्क्षानुवादिनः ॥ १९३ ॥

चक्रुर्निषेधं सर्वेऽपि क्रान्तिकृत्यस्य भारते ।
भारतीयाः पत्रकारा असंदिग्धोक्तिभिस्तदा ॥ १९४ ॥

प्रायश्चित्तं यथान्यायं दातव्यं स्फोटकारिणाम् ।
अबलाघातिनां तेषामुद्वृत्तपथगामिनाम् ॥ १९५ ॥

आङ्ग्लहिन्दीपत्रकारास्तद्वदिंग्लंदवर्तिनः ।
उच्चैराचुक्रुशुः सर्वे हन्यतां हन्यतामिति ॥ १९६ ॥

हन्यतां यः प्राणघाती दण्ड्यन्तां तत्सहायकाः ।
प्रच्छन्ना विपरीता वा शासनस्य हि शत्रवः ॥ १९७ ॥

सुरेन्द्रनाथप्रभृतिनेतारोऽपि विनिन्दिताः ।
लेखकैराङ्ग्लपत्राणां भारतेंग्लंदयोरपि ॥ १९८ ॥

मुखपत्रं महाराष्ट्रे केसरीपत्रमेव हि ।
स्वराज्यवादिपक्षस्य विज्ञातं भारतेऽखिले ॥ १९९ ॥

दातुं प्रत्युत्तरं तेभ्यः केसरीपत्रलेखकः ।
अलिखट्टिप्पणीलेखानग्रलेखांस्तथोचितान् ॥ २०० ॥

ग्रहणाय रहस्यस्य केसरीपत्रलेखयोः ।
पूर्वपक्षस्य लेखानां ज्ञानं स्थूलमपेक्षितम् ॥ २०१ ॥

समीक्षार्थं मया लेखास्तेषु केचित् प्रदर्शिताः ।
न्यायमूर्तेश्च पंचानामायोगलिखिताकरे ॥ २०२ ॥

तथैव हिन्दपत्राणां लेखानामपि संग्रहः ।
सम्यग्ज्ञानाय लोकानां भावनानां मयार्पितः ॥ २०३ ॥

स्फोटजन्या प्राणहानिः शोचनीया घृणास्पदा ।
सर्वेषामेव लोकानां शिष्टानां भारतेऽभवत् ॥ २०४ ॥

निमित्तं तस्य कृत्वैव सर्वे प्रगतिरोधिनः ।
राजकीयान्दोलनस्य विनाशाय समुद्यताः ॥ २०५ ॥

आन्दोलनप्रेरकाश्च राजद्रोहप्रसारकाः ।
तेषामुत्तेजनेनैव स्फोटानर्थो भवेदिति ॥ २०६ ॥

सर्वेऽपि ते दण्डनार्हा दया कार्या न च क्षमा ।
इत्याक्रोशः कृतः सर्वैः राष्ट्रीयत्वविरोधकैः ॥ २०७ ॥

महासभाशत्रवस्ते भारतप्रगतेस्तथा ।
जलौका इव ये नित्यं भारताशुद्धशोषकाः ॥ २०८ ॥

तेषामपप्रचारस्य प्रतीकाराय लेखनी ।
लेखकैरुपयुक्तासीद् भारतीयैः स्वरक्षणे ॥ २०९ ॥

केसरीपत्रलेखानामस्तीयं पूर्वपीठिका ।
दुष्प्रचारप्रतीकारः सन्मार्गस्य प्रदर्शनम् ॥ २१० ॥

देशे स्वास्थ्यप्रतिष्ठायै शासनस्याधिकारिणे ।
उद्देशौ केसरीपत्रलेखानां न्यायसंमतौ ॥ २११ ॥

भारतीयेषु पत्रेषु बहुधा प्रतिपादितम् ।
दण्डनीयः प्राणघाती न्यायमार्गानुसारतः ॥ २१२ ॥

निरागसां च यो हन्ता वनितानां भवेन्नरः ।
घोरदण्डोचितो दण्डशास्त्रज्ञैर्मन्यते हि सः ॥ २१३ ॥

कर्तव्यान्तं तु भूपालो दण्डेनैव न गच्छति ।
कथं लोकेषु संजाता दुष्प्रवृत्तिर्भयावहा ॥ २१४ ॥

शोधनं तत्कारणानां शासनाधिपतेर्भवेत् ।
कर्तव्यमपरीहार्यं नियन्तुः स्वास्थ्यरक्षयोः ॥ २१५ ॥

विज्ञाय तद्विनाशाय शासनेन समुद्यमः ।
कर्तव्य इति राष्ट्रीयपत्राणां सूचनाशयः ॥ २१६ ॥

बिम्बिता राष्ट्रनेतॄणां वृत्तपत्रेषु धारणा ।
समञ्जसा च योग्या च शासनस्य हितप्रदा ॥ २१७ ॥

समाश्रिता नीतिरेषा केसरीलेखपद्धतौ ।
प्रलापानां निषेधाय भारताहितकारिणाम् ॥ २१८ ॥

नौरोजीगोखलेमेथा अवदन् यत् पुरा सकृत् ।
तदेवोक्तं प्रस्तुतेषु केसरीलिखितेषु हि ॥ २१९ ॥

नासन् शङ्कास्पदं तेषां वचनानि कथं मम ।
वचनेष्वेव संजाता शङ्का प्रान्ताधिकारिणः ॥ २२० ॥

न हि पूरो निम्नगानां पर्जन्येन विना भवेत् ।
अत्याचारं विना राज्ञो लोकक्षोभो न जायते ॥ २२१ ॥

नीतिशास्त्रस्य सिद्धान्त इतिहाससमर्थितः ।
तदुच्चारे कथं दोषो नैतिको वैधिकोऽथवा ॥ २२२ ॥

विनश्यत्यपराध्येव दण्डेनोग्रेण केवलम् ।
तदन्येषां तु चित्तेषु न तद्वृत्तेः समुद्भवः ॥ २२३ ॥

कर्तव्यं कथनं ह्येतच्च शासनाय च सर्वदा ।
निर्मातुर्वृत्तपत्राणां लोकैकहितवादिनः ॥ २२४ ॥

मोर्लेप्रभृतितज्ज्ञानां पुष्ट्यै लेखमतस्य वै ।
ग्रन्थेभ्य उचितानंशानुद्धरिष्यामि कांश्चन ॥ २२५ ॥

काव्येऽस्मिन् कथये नाहमुक्तग्रन्थाभिधावलीम् ।
मूलाङ्ग्लभाषणे तानि द्रष्टव्यानि समुत्सुकैः ॥ २२६ ॥

श्रोतारश्चकिताः सर्वे संदर्भग्रन्थसंख्यया ।
यथोचितानामुक्तीनां लीलयोद्धरणेन च ॥ २२७ ॥

प्रशासनाधिकारस्य संक्रान्तिश्च यथोचिता ।
शासनेन हि कर्तव्या हत्याकाण्डात्ययेच्छुना ॥ २२८ ॥

संक्रान्तिरधिकारस्य वरिष्ठादवरं प्रति ।
भृत्योच्चश्रेणिसंस्थायां मन्मते सा निरर्थका ॥ २२९ ॥

मया सविस्तरं प्रोक्ता विचाराः समितिं प्रति ।
अधिकारविभक्तेश्च प्रार्पिते मन्निवेदने ॥ २३० ॥

अस्ति नोत्तरदायित्वं शासनस्य च भारते ।
उद्घोषितमिदं तत्त्वं सुज्ञैरर्धशतं समाः ॥ २३१ ॥

वेडर्बर्नादिभिः कैश्चिच्च् शासनस्याधिकारिभिः ।
ज्येष्ठैः सेवानिवृत्तैर्वै भारतस्य हितैषिभिः ॥ २३२ ॥

प्रारम्भादद्यपर्यन्तं तत्त्वं तत् प्रतिपादितम् ।
केसरीवृत्तपत्रेण राजनीतिज्ञसंमतम् ॥ २३३ ॥

वर्णनं शासनस्यासीद् विद्यमानस्य भारते ।
तेन द्रोहः शासनस्य संभवेन्न कथंचन ॥ २३४ ॥

न रोचतेऽधिकारिभ्यो यदिदं शास्त्रसंमतम् ।
सत्यं कदापि दोषस्य पात्रं नैव भविष्यति ॥ २३५ ॥

यायाल्लयं लेखनस्य स्वातन्त्र्यं यदि बाध्यते ।
शासकाप्रियसत्यस्य स्पष्टोक्तिरधिकारिभिः ॥ २३६ ॥

इंग्लिश्मनाख्यपत्रेण शासनस्य तु सूचिता ।
आन्दोलकेभ्यः सर्वेभ्यो विनिन्द्या दण्डपद्धतिः ॥ २३७ ॥

हस्ते दत्त्वा प्रतोदान् वै ग्रामशौचोपजीविनाम् ।
तानादिशच्च शासनेशस्ताडयान्दोलकानिति ॥ २३८ ॥

आन्दोलकाः प्राप्नुवन्ति कीर्तिं न्यायसमीक्षया ।
पूर्वमुक्तप्रकारेण गमिष्यन्त्युत वाच्यताम् ॥ २३९ ॥

नेतॄणां भारतीयानां निन्देयं क्षोभकारका ।
तद्दुरुक्तिनिषेधस्य यत्नः केसरिलेखयोः ॥ २४० ॥

विहितो दण्डशास्त्रेषु शास्त्राज्ञाया अतिक्रमः ।
आत्मनः स्वास्थ्यरक्षायै सुमर्यादानुपालितः ॥ २४१ ॥

बहुमूल्यं स्वमस्त्येव पत्रकारस्य लौकिकम् ।
कर्तव्यं रक्षणं तस्य प्रहारात् प्रतिपक्षिणः ॥ २४२ ॥

तेजस्विपत्रकारस्य मर्यादाया अतिक्रमः ।
धर्मशास्त्रमतेनास्ति न्याय्यं चैवात्मरक्षणम् ॥ २४३ ॥

हियर्सेनामकः कश्चित् पायोनियरनिन्दितः ।
दलाधिकारी सेनायाः संतप्तो मुद्रणालयम् ॥ २४४ ॥

प्राविशच्च प्रतोदेन ताडयामास लेखकम् ।
प्राप्नोद् न्यायफलं सर्वमगत्वा न्यायमन्दिरम् ॥ २४५ ॥

वृत्तपत्रयशोरक्षाव्रतमुग्रमनुष्ठितम् ।
केसरीवृत्तपत्रेण भारते तत् सुविश्रुतम् ॥ २४६ ॥

अत्रोद्देशोऽपशब्दानामुत्तरं परिपन्थिनः ।
नासंतोषसमुत्पत्तिः शासनाहितकारिणी ॥ २४७ ॥

राजद्रोहाख्यदोषस्य प्रवेशो दण्डनस्मृतौ ।
इंग्लंडे हि कथं जातस्तत्संकोचविकासयोः ॥ २४८ ॥

भाषणे रम्यवृत्तान्तस्तिलकेन निरूपितः ।
युक्ताधारान् न्यायमूर्तेः संप्रदर्श्य प्रतिस्थलम् ।। २४९ ।।

स्वातन्त्र्यप्रियलोकेषु राजद्रोहस्य कल्पना ।
दृश्यते या तथैवेह ज्ञेया समुचिता बुधैः ।। २५० ।।

उच्चन्यायप्रवीणानां मताधाराः प्रदर्शिताः ।
ईंग्लंदस्यान्यदेशानां कलितानि मतानि च ।। २५१ ।।

मतस्वातन्त्र्यसंकोचो न भवेदिति दक्षता ।
दृश्यते लेखने तेषां राजद्रोहसमीक्षणे ।। २५२ ।।

चत्वारो विधिकर्तारो राजा न्यायाधिपस्तथा ।
ज्यूरीस्थन्यायपंचाश्च रूढिश्चैव पुरातनी ।। २५३ ।।

संदृष्टवस्तुकथनं वानुमानं तदाश्रितम् ।
विषयो ज्यूरिपंचानां निर्णयस्यैव विद्यते ।। २५४ ।।

विधिशास्त्रस्य तत्त्वानां न्यायपीठस्य निर्णयः ।
पद्धतौ सभ्यराष्ट्राणां प्रमाणमिति संमतम् ।। २५५ ।।

इंग्लंदेऽपि सदस्यानां ज्यूरीस्थानां मतेन वै ।
स्वातन्त्र्यं रक्षितं सम्यक् सुज्ञानां दूरदर्शिनाम् ।। २५६ ।।

स्वयंसिद्धाधिकारेषु मानवानां च गण्यते ।
सर्वसंस्कृतराष्ट्रेषु वाणीलेखस्वतन्त्रता ।। २५७ ।।

प्रजातन्त्रस्य राज्यस्य विहितः स विशेषतः ।
व्यक्तिस्वातन्त्र्यमाधारो लेखनोच्चारयोरपि ।। २५८ ।।

निर्भयत्वं विना चर्चा मतोच्चारे निरर्थका ।
समस्यानां भारतस्य रक्षायै च हिताय च ।। २५९ ।।

अराजकस्य भेदोऽभूदत्याचारप्रवर्तकात् ।
लेखे प्रदर्शितो भेदो राजनीतिज्ञसंमतः ।। २६० ।।

अराजकं महाशत्रुः प्रजाशासनयोरपि ।
अत्याचारो हेतुपूर्वं सहसैव प्रवर्तते ॥ २६१ ॥

न कण्टकः समाजस्य स तद्दुःखेन दुखितः ।
आकर्ष्टुं शासनेशं हि लोकान् सुखयितुं तथा ॥ २६२ ॥

प्रवर्तते बुद्धिदोषात् कर्तुं कर्म भयावहम् ।
अपराधक्षालनार्थं दण्ड्योऽसावधिकारिणा ॥ २६३ ॥

दण्डशास्त्रानुसारेण दण्डनीयावुभावपि ।
राजनीत्यां हेतुदृष्ट्या तारतम्यं तु वर्तते ॥ २६४ ॥

न वै दण्डोत्तरं किंचित् कर्तव्यमवशिष्यते ।
अराजकस्य संबद्धं शासनस्याधिकारिणः ॥ २६५ ॥

प्रशासनस्य कर्तव्यमत्याचारिणि दण्डिते ।
प्रजाहितप्रापकस्य तत्त्वतो नोपरंस्यति ॥ २६६ ॥

तत्प्रवृत्तेः कारणानां कृत्वा सूक्ष्मपरीक्षणम् ।
प्रशासनेन कर्तव्या ह्युचितोपाययोजना ॥ २६७ ॥

तदर्थं पत्रकाराणां कर्तव्यं द्विविधं भवेत् ।
पूर्वं निषेधो दोषस्य द्वितीयं मार्गदर्शनम् ॥ २६८ ॥

कृतं केसरिपत्रेण स्वकर्तव्यं यथामति ।
न कस्यापि द्रोहबुद्ध्या किंतु शुद्धेन हेतुना ॥ २६९ ॥

माल्कमामासजोबर्टनार्टनेलिपस्तनादयः ।
यदुक्तं तल्लिखन्ति स्म केसरीपत्रलेखने ॥ २७० ॥

संमान्याः पण्डिता एते नापराधकृतो यदि ।
तेषां मतान्युदाहृत्य कथं स्यां दोषभागहम् ॥ २७१ ॥

भाषान्तरेण लेखस्य नार्थबोधो भवेत् सदा ।
अनुवादप्रमादात् तु विपरीतार्थसंभवः ॥ २७२ ॥

अच्छिनच् शासनं हस्तपादं शस्त्रेण भारते ।
लोकस्येति जनाः केचिद् भाषान्तरविलोकनात् ॥ २७३ ॥

वदेयुरनभिज्ञाय मूललेखस्य सर्वथा ।
अज्ञानाल्लोकभाषायाः प्रौढवाक्पद्धतेरपि ॥ २७४ ॥

उच्छेदनं शासनेन कृतं भारतवासिनाम् ।
उद्यमानां पौरुषस्य शौर्यस्यापि च तेजसः ॥ २७५ ॥

उक्तं लक्षणया लेखे मयैतदिति बुद्धिमान् ।
ज्ञाता मन्मातृभाषाया जानात्येव न संशयः ॥ २७६ ॥

स्फोटद्रव्याणि निर्मातुं शिक्षयामि जनानिति ।
उच्यते शङ्किभिः कैश्चित् सततं मद्विरोधकैः ॥ २७७ ॥

आयोगविषया वार्ता जाता या न्यायमन्दिरे ।
प्रकाशयामि तां सर्वां ध्रुवं केसरिलेखने ॥ २७८ ॥

बांबक्षेपकसंबद्धं तेन प्रेम सकौतुकम् ।
उत्पद्यते समाजस्य यद् भवेद् हानिकारकम् ॥ २७९ ॥

हिंस्रस्य संप्रदायस्य पोषणाय प्रकाशनम् ।
बांबविद्याप्रसाराय साधनं च भविष्यति ॥ २८० ॥

असंबद्धमिदं सर्वं दुर्बुद्धीनां प्रजल्पनम् ।
न्यायोपयोग्यं विद्वद्भिर्मन्यते हि प्रकाशनम् ॥ २८१ ॥

प्राकट्यं न्यायमार्गस्य न्यायावाप्तेर्महत्तमम् ।
साधनं मन्यते सुज्ञैर्विधिशास्त्रविशारदैः ॥ २८२ ॥

न केवलं पक्षकाराः किंतु निष्पक्षपातिनः ।
मां हि पश्यन्ति दूरस्थाः समीपस्थाश्च सज्जनाः ॥ २८३ ॥

न्यायेश इति विज्ञाय जागरूकः सदा भवेत् ।
परिहाराय दोषाणां संप्राप्ते न्यायकर्मणि ॥ २८४ ॥

पत्रकारा भारतेषु प्रकाशनपरायणाः ।
आङ्ग्ला अप्यभियोगार्हा न मत्पत्रं च केवलम् ॥ २८५ ॥

उपलब्धं त्वेकपत्रं मद्गृहस्य गवेषणे ।
नामनी लिखिते यस्मिन्नास्तां पुस्तकयोर्द्वयोः ॥ २८६ ॥

तत्कारणं कृतं स्पष्टं मया पूर्वनिवेदने ।
निवेदयामि तत् सर्वमुचितं च सविस्तरम् ॥ २८७ ॥

अस्मिन् खण्डे पुनः सारं वक्तुं नेच्छामि संप्रति ।
उक्त एव यथाकालं पूर्वग्रन्थे तदाशयः ॥ २८८ ॥

नावकाशोऽनुमानस्य प्रतिकूलस्य सर्वथा ।
ग्रन्थयोर्नामनिर्देशात् तस्मिन् पत्रे प्रदर्शिते ॥ २८९ ॥

वर्गद्वेषस्य दोषोऽन्यो लेखेनास्ति मया कृतः ।
आरोपपत्रिकायां वै न्यायाधीशेन दर्शितम् ॥ २९० ॥

नैवानीतः कोऽपि साक्षी वर्गद्वेषस्य सिद्धये ।
पठित्वा केसरीलेखं वर्गद्वेषः समुत्थितः ॥ २९१ ॥

केनापि साक्षिणा नैवं कथितं न्यायमन्दिरे ।
वर्गद्वेषो यतोऽसिद्धो नाहमागस्करोऽस्मि वै ॥ २९२ ॥

अभिप्रायः पत्रिकाया दोषयत्नो भवेद् यदि ।
तत्र हेतोरसिद्धत्वादारोपस्तु निराकृतः ॥ २९३ ॥

वर्गशब्दो जातिवंशधर्मभेदस्य वाचकः ।
तदाश्रितसमूहस्य वर्गसंज्ञा विधीयते ॥ २९४ ॥

राजकारणपक्षास्तु नाभिप्रेताः कदाचन ।
भारतीये दण्डविधौ घटनाशास्त्रपण्डितैः ॥ २९५ ॥

राष्ट्रे ह्येको राजपक्षो लोकपक्षोऽपरस्तथा ।
राजनीत्याहवे नित्यं परस्परविरोधिनौ ॥ २९६ ॥

आङ्ग्लहिन्दीपत्रकारा राजपक्षानुयायिनः ।
केसरीपत्रकाराद्या लोकपक्षाभिमानिनः ॥ २९७ ॥

तेषां मध्ये समुद्भूतो वादो न कलहो भवेत् ।
समाजस्वास्थ्यविध्वंसी वर्गद्वेषाभिधः कदा ॥ २९८ ॥

वर्गद्वेषाह्वयो दोषो वृथा ह्यारोपितो मयि ।
अवैधश्चास्त्यसिद्धश्च प्रार्थिपक्षेण सर्वथा ॥ २९९ ॥

अधिकारस्य विस्तारो ज्यूरीणां सप्तमेऽहनि ।
सविस्तरं वर्णितश्च तिलकेन स्वभाषणे ॥ ३०० ॥

पूर्वभागे तरङ्गस्य तत्स्वरूपं प्रदर्शितम् ।
द्विरुक्तिं कथितार्थस्य नाहं कर्तुं समुत्सहे ॥ ३०१ ॥

निश्चिता अधिकारास्तु ज्यूरीणां विधिकर्तृभिः ।
हस्तक्षेपो न्यायमूर्तेस्तत्रावैधो भवेत् खलु ॥ ३०२ ॥

आरोपितापराधानां विचारार्थं निरीक्षणम् ।
आसन्नधिकृताः कर्तुं न्यायपंचाः परिस्थितेः ॥ ३०३ ॥

अधिकारोपयोगेन लेखस्वातन्त्र्यरक्षणम् ।
निर्भयैर्व्यवहारज्ञैः कर्तव्यं ज्यूरिभिः सदा ॥ ३०४ ॥

खण्डनं प्रतिपक्षस्य मण्डनं मन्मतस्य च ।
उद्देशोऽस्त्येव लेखानां न द्रोहः शासनस्य तु ॥ ३०५ ॥

द्वाविंशे दिवसाङ्के च जुलय्यां सौम्यवासरे ।
तिलकेन कृतं स्वल्पमुपसंहारभाषणम् ॥ ३०६ ॥

व्यतरद् धन्यवादांश्च श्रोतृभ्यो भाषणस्य सः ।
ज्यूरीस्थेभ्यो गृहस्थेभ्यश्चाधिचक्रे विरोधिने । ३०७ ॥

प्रोक्तं मया दीर्घकालं मद्विमुवरयै न केवलम् ।
स्वातन्त्र्यं रक्षितुं लेखभाषणानां तु मुख्यतः ॥ ३०८ ॥

जातोऽहं वयसा वृद्ध आयुष्युर्वरिते मम ।
स्वल्पा स्पृहोपभोगस्य सुखानां देहलोभिनाम् ।। ३०९ ।।

उदयो मातृभूमेर्मे मतस्वातन्त्र्यरक्षणात् ।
भविष्यत्यचिरादेव तस्माद् यत्नः कृतो मया ।। ३१० ।।

मनुजश्चाल्पजीवी स्याद् मातृभूश्चिरजीविनी ।
यत्नस्तनोति साफल्यं तदुद्धारस्य निश्चितम् ।। ३११ ।।

इंग्लंदे कृत आयासो ज्यूरिशासनपद्धतिम् ।
अधिकारसुसंपन्नां कर्तुमाङ्ग्लजनैः पुरा ।। ३१२ ।।

स्वातन्त्र्यप्रियता ध्येयमाङ्ग्लानां विश्वविश्रुतम् ।
यूयं सर्वे न्यायपंचा रक्षितुं हि तदर्हथ ।। ३१३ ।।

मत्संबद्धं विप्रियत्वमाङ्ग्लपत्रकृतं च यत् ।
पूर्वग्रहेण दुष्टं तद् विस्मर्तव्यं हि ज्यूरिभिः ।। ३१४ ।।

विचार्य यन्मया प्रोक्तं कुरुध्वं मतनिर्णयम् ।
भाग्यस्य शिल्पकाराश्च भारतस्य भविष्यतः ।। ३१५ ।।

यद्येकोऽपि सदस्येषु ज्यूरिस्थेषु वदेत् खलु ।
निर्दोषोऽहं भवेच्चित्तशान्तिसौख्यप्रदं मम ।। ३१६ ।।

बुद्धिं देहि धृतिं देहि सदस्येभ्योऽधुना प्रभो ।
ज्ञातुं वक्तुं च सत्यार्थं प्रार्थये विश्वमङ्गल ।। ३१७ ।।

तदुक्त्वा तिलकस्तूष्णीमभूदुपरराम च ।
दिनाष्टककृताद् दीर्घाद् निर्दोषत्वोपपादनात् ।। ३१८ ।।

प्रशासनस्याधिवक्ता ब्रॅन्सनो विधिपण्डितः ।
तिलकायोत्तरं दातुं समारेभे स्वभाषणम् ।। ३१९ ।।

प्रहरादधिकं कालं भाषणं ब्रॅन्सनोऽकरोत् ।
बालोपपादनस्यास्य वैयर्थ्यं प्रतिपादितुम् ।। ३२० ।।

न कारणानि युक्तानि तेन दत्तानि मन्मते।
नासन् तर्कानुकूलानि न्यायवित्संमतानि च ।। ३२१ ।।

पुनरुक्तास्तेन दोषाः प्रार्थिपत्रे प्रदर्शिताः।
स्वाकर्तव्यं यथायोग्यमाङ्ग्लरूपान्तरं सदा ।। ३२२ ।।

वरिष्ठन्यायपीठस्य कृतं यदधिकारिणा।
स्थितेष्वपि प्रमादेषु न्यूनतां याति नैव तत् ।। ३२३ ।।

लेखाशयस्यानुमानमाङ्ग्लभाषान्तरेण वै।
सदस्यानां चिकीर्षूणां न्याय्यो दोषो न विद्यते ।। ३२४ ।।

सदोषे दर्पणे दृष्ट्वा प्रतिबिम्बं च कल्पनाम्।
नैव मूलस्य बिम्बस्य वक्तुं सुज्ञः प्रवर्तते ।। ३२५ ।।

ब्रॅन्सनस्तद्विपर्यस्तं सूचयामास भाषणे।
बुद्धिभेदाय ज्यूरीस्थसदस्यानां दुराग्रहात् ।। ३२६ ।।

एकविंशतिहोराणां कालो बालस्य भाषणे।
लेखनार्थप्रबोधाय ज्यूरीस्थानां सभासदाम् ।। ३२७ ।।

व्यतीत इति संदृष्टो भवद्भिर्ज्यूरिसज्जनैः।
सामान्यानां वाचकानां लाभो न सुकरस्त्वयम् ।। ३२८ ।।

तस्य भाष्यं विना योऽर्थः सामान्येन प्रतीयते।
लेखकेन स एवार्थ उद्दिष्ट इति मन्यते ।। ३२९ ।।

सुलभं बांबनिर्माणं न तस्योच्चाटनं भवेत्।
विना लोकेषु संक्रान्तिं संप्रबुद्धेषु भारते ।। ३३० ।।

शासनस्याधिकाराणां सार्वभौमेन सत्वरम्।
अस्य वाक्यस्य तात्पर्यं चिन्तनीयं विवेकिभिः ।। ३३१ ।।

मावधारय लेखार्थं तिलकेन कृतं त्विह।
कृतारोपात् स्वरक्षायै भाषणे न्यायमन्दिरे ।। ३३२ ।।

प्रकाशनक्षणे तस्य जानीह्यर्थं स्वबुद्धिना ।
अभिप्रेतं ह्याङ्ग्लभाषान्तरं मत्वा यथातथम् ॥ ३३३ ॥

अत्याचारिदुराचारिभेदो बालेन हेतुतः ।
कृतोऽस्त्येव प्रशंसार्थं प्रथमस्य स्वलेखने ॥ ३३४ ॥

प्रोत्साहनपरस्तस्य संभवो विद्यते न वा ।
तत्प्रवृत्तेर्विशेषेण भवद्भिः संप्रधार्यताम् ॥ ३३५ ॥

प्रदर्शितस्य पत्रस्य ब्रॅन्सनेन कुबुद्धिना ।
उल्लेखः सूचनां दातुं न्यायपंचान् हठात् कृतः ॥ ३३६ ॥

संबन्धस्तिलकस्यासीदत्याचारानुवर्तिभिः ।
हेतुनानेन तेनासीत् तदुल्लेखः कृतस्तदा ॥ ३३७ ॥

तिलकस्योत्तरं त्यक्तं मत्वाप्रामाणिकं च तत् ।
निराधारविधानैश्च तिलकस्तेन निन्दितः ॥ ३३८ ॥

आत्मरक्षाधिकारोऽस्ति दण्डशास्त्रस्य संमतः ।
तिलकेन स्वलेखे तन्मर्यादातिक्रमः कृतः ॥ ३३९ ॥

न पालितः सदाचारो ब्रॅन्सनेन स्वभाषणे ।
इति तस्योत्तरस्यान्ते तज्ज्ञा ऊचुरुपस्थिताः ॥ ३४० ॥

न्यायमूर्तिः समारोपं समारभत डावरः ।
पश्यामि श्रवणश्रान्तान् पंचान् ज्यूरिस्थसज्जनान् ॥ ३४१ ॥

तस्मान्न भाषणं दीर्घं करोम्यद्य दिनेऽष्टमे ।
अवोचत् साग्रहं न्यायमूर्तिर्ज्यूरिपदस्थितान् ॥ ३४२ ॥

भवत्सु दर्शयामास विश्वासं तिलकः स्वयम् ।
कृतं तदुचितं मन्ये युष्माकं तिलकं प्रति ॥ ३४३ ॥

सहानुभूतिः क्षम्या स्यात् तं दृष्ट्वा विपदि स्थितम् ।
भावनावशता हेया कर्तव्यपरिपालने ॥ ३४४ ॥

मनसा भयशून्येन कर्तव्यः सत्यनिर्णयः ।
विचार्य कथनं सम्यक् पक्षयोरुभयोरपि ॥ ३४५ ॥

स्ट्राचीकृतमभूद् मान्यं राजद्रोहविवेचनम् ।
मुम्बईन्यायपीठस्य श्रेष्ठन्यायाधिकारिणाम् ॥ ३४६ ॥

प्रीतेरभावो ह्यप्रीतिर्भवत्येवेति कथ्यते ।
स्ट्राचेर्व्याख्यानमेतद् वै डावरस्य सुसंमतम् ॥ ३४७ ॥

प्रयत्नस्य भवेत् पूर्तिः प्रारम्भेणैव सर्वथा ।
नापेक्षा परिणामस्य सिद्ध्यर्थं तस्य विद्यते ॥ ३४८ ॥

लेखे कृतविधानानां सत्यासत्यविचारणा ।
नावश्या न्यायविज्ञानामपराधविनिर्णये ॥ ३४९ ॥

पायोनियरलेखेन संक्रुद्धस्तिलकोऽभवत् ।
शासनाय तदर्थं च तिलको दूषणं ददौ ॥ ३५० ॥

साप्ताहिकं वृत्तपत्रं शासनेन प्रकाशितम् ।
ग्याझेटनाम्ना लोकेषु विदितं भारतेऽखिले ॥ ३५१ ॥

प्रायश्चित्तं पापिनश्च कदाप्यन्यस्य नैव तु ।
पायोनियर्शासनयोः संबन्धो बादरायणः ॥ ३५२ ॥

चिन्तनीयं सभासद्भिर्ज्यूरिस्थैरस्ति वा न वा ।
तिलकस्य यथायोग्यं क्षोभोत्पादनकारणम् ॥ ३५३ ॥

स्फोटकक्षेपणं क्रूरं किमर्थं तत् प्रशस्यते ।
एकार्थे यदि युक्तं स्याद् नैकार्थेषु विघातकम् ॥ ३५४ ॥

ज्ञातव्यं तद्विचारेण लेखानां परिशीलनात् ।
यथावद्ग्रहणाच्चापि लेखकालपरिस्थितेः ॥ ३५५ ॥

उपदेशश्च बालेन शासनस्यास्ति यः कृतः ।
तत्पुष्ट्यर्थं युज्यते किं प्रशस्तिपरलेखनम् ॥ ३५६ ॥

स्फोटग्रन्थाभिधापत्रं विचारार्हं न मन्यते।
तत्संबद्धा तैलकोक्तिः स्वीकारार्हेति दृश्यते ॥ ३५७ ॥

तत् स्वीकार्यं भवद्भ्यश्च रोचते यन्मदुक्तिषु।
त्यक्त्वेतरं मतं दद्युः सत्यान्वेषणबुद्धयः ॥ ३५८ ॥

समापयत् समारोपं स रात्रावष्टवादने।
ज्यूरिस्थसज्जनाः सर्वे विचारार्थं विसर्जिताः ॥ ३५९ ॥

कक्षे च पिहितद्वारे न्यायकार्यालयस्थिते।
सार्धद्विघटिकाकालं तस्थुर्ज्यूरिसभासदः ॥ ३६० ॥

गणेशमाह तिलकस्तस्मिन्नवसरे लघौ।
संपिबामो वयं सर्वे चहाचषकमन्तिमम् ॥ ३६१ ॥

नाटकस्य प्रयोगाय कस्याप्यत्यद्भुतस्य च।
संपन्नं सर्वसामग्र्या रङ्गस्थलमलंकृतम् ॥ ३६२ ॥

अनुमानं प्रदण्डस्य देशाद् निष्कासनं बहिः।
करोमि पूर्वचिह्नेभ्य आगतेभ्यो दृशः पथि ॥ ३६३ ॥

चहाकालेऽवदद् बालः सुहृद्वर्यैः सह स्थितः।
संवदत्सु सदस्येषु ज्यूरिस्थेषु स्थलेऽन्तिके ॥ ३६४ ॥

निश्चलं तिलकं दृष्ट्वा विषमे समुपस्थिते।
खापर्डे तं समानर्च सिद्धतुल्यं हृदासने ॥ ३६५ ॥

पर्यपृच्छद् न्यायमूर्तिः पंचान् प्रत्यागतांस्तदा।
मतैक्यं वा माताधिक्यं निर्णये भवतामिति ॥ ३६६ ॥

ऊचुस्ते मतभेदोऽस्ति न्यायेशः प्राह तांस्तदा।
मन्यते कतिभिर्दोषी निर्दोषः कतिभिः पुनः ॥ ३६७ ॥

सप्तभिर्गण्यते दोषी न दोषीति मतं द्वयोः।
तिलकोऽस्त्यपराधानामिति तेषां निवेदनम् ॥ ३६८ ॥

न्यायमूर्तिः पुनः प्रश्नमकरोज् ज्यूरिसज्जनान् ।
किं वः पुनर्विचारे स्यादैकमत्यस्य संभवः ॥ ३६९ ॥

नैवास्तीत्युत्तरं श्रुत्वा न्यायाधीशो मतं ददौ ।
ज्यूरीबहुमतस्याहं स्वीकरोमि विनिर्णयम् ॥ ३७० ॥

प्रशासनस्याधिवक्ता मस्तकस्थितकाकवत् ।
पिपासुः पशुरक्तं वै न्यायाधीशमुवाच ह ॥ ३७१ ॥

अपराधीति निर्णीते तिलकोऽस्मिन् समीक्षणे ।
दण्डस्योद्घोषणात् पूर्वं नवारोपं करोम्यहम् ॥ ३७२ ॥

अपूर्णे बन्दिवासस्यावधौ बन्धाद् विमोचितः ।
तिलकः शासनेनासीत् पुरा ज्ञातमिदं जनैः ॥ ३७३ ॥

भूत्वा कृतज्ञस्तिलकस्तदाभिवचनं ददौ ।
तत्कर्मविनियुक्ताय शासनस्याधिकारिणे ॥ ३७४ ॥

भोक्ता स्यां बन्दिवासस्य शेषस्य च पुनर्यदि ।
राजद्रोहापराधीति सिद्धं चेद् न्यायमन्दिरे ॥ ३७५ ॥

षण्मासस्यावधिः शेषः भोक्तव्यस्तिलकेन तु ।
दास्यमानेन दण्डेन सहैवास्मिन् समीक्षणे ॥ ३७६ ॥

विज्ञापयामि तत्पूर्वं न्यायेशं तिलकोऽवदत् ।
सत्वरं संमतिर्देया प्रार्थनायास्त्वयेत्यहम् ॥ ३७७ ॥

संपूर्णन्यायपीठस्य महोच्चन्यायसद्मनः ।
स्थापितव्या विचारार्थं प्रश्ना एते चतुर्दश ॥ ३७८ ॥

तत्प्रश्नानां ततस्तेन सूचिपत्रं समर्पितम् ।
श्रुत्वा सर्वं न्यायमूर्तिराह “ नाहं करोमि तत् ” ॥ ३७९ ॥

आक्षेपार्हाः प्रमादाश्च विधिशास्त्रातिगामिनः ।
न्यायकर्मणि जाता ये दर्शिताः सूचिपत्रके ॥ ३८० ॥

तिलकेन ततः पश्चाद् वचनस्याभिपूर्तये ।
दर्शिता सत्प्रतिज्ञेन संमतिर्न्यायमूर्तये ॥ ३८१ ॥

तुर्यारोपस्ततः पश्चादधिवक्त्रा त्वपाकृतः ।
आरोपानां त्रयाणां तु दोषित्वं तेन घोषितम् ॥ ३८२ ॥

न्यायेशस्तिलकं प्राह यदि त्वं वक्तुमिच्छसि ।
किमप्यस्ति सुयोग्योऽयं तदर्थं समयोऽधुना ॥ ३८३ ॥

उवाच तिलको दिव्यां वाचं ब्रह्मप्रचोदिताम् ।
धीरोदात्तामर्थगर्भां न्यायबीजप्रबोधिनीम् ॥ ३८४ ॥

ज्यूरिस्था मां वदन्त्येते पंचा यद्यपराधिनम् ।
तथापि नापराधीति त्रिवारं घोषयाम्यहम् ॥ ३८५ ॥

विद्यतेऽस्माद् न्यायपीठाच् शक्तिर्दिव्या महत्तरा ।
नियम्यन्ते यया सर्वे व्यापारा लौकिका इह ॥ ३८६ ॥

मयाङ्गीकृतकार्यस्य सिद्ध्यै मद्देहदण्डनम् ।
मुक्तस्थितौ समुद्योगादुपयुक्ततरं मम ॥ ३८७ ॥

ईशेच्छामिति तां मत्वा विश्वकल्याणकारिणीम् ।
प्रपद्ये शरणं भक्त्या दिव्यां तां न्यायमातरम् ॥ ३८८ ॥

न्यायालये तमोव्याप्ते मध्यरात्रौ प्रकाशितम् ।
ज्योतिर्ज्ञानमयं वक्त्रात् तिलकस्य महात्मनः ॥ ३८९ ॥

तिलकोपनिषत् पुण्या सर्वेषां स्फूर्तिदायिनी ।
भारतैः पठनीयेयं देशसेवां चिकीर्षुभिः ॥ ३९० ॥

प्रज्वालयन् क्षणं तेजो न्यायमूर्तेः पुरः स्थितः ।
तिलकस्तन्मुखाच्छ्रोतुं दण्डवाक्यं सुनिश्चितम् ॥ ३९१ ॥

लुप्ते तिलकवाग्ज्योतिःप्रकाशे तिमिराप्लुते ।
स्थले प्रज्ञाद्दगन्धत्वमवाप न्यायदेवता ॥ ३९२ ॥

निशामुखे यथा शान्तो द्विजानां मञ्जुलध्वनिः ।
शिवाक्रोशः श्रूयते वा घूकशब्दस्त्वमङ्गलः ॥ ३९३ ॥

अभिभूतः पिशाचेन श्रुत्वा मन्त्रानथर्वणः ।
असंबद्धप्रलापांश्च कुरुते भ्रष्टधीरिव ॥ ३९४ ॥

अभवद् दावरस्तद्वच् श्रुत्वा बालान्तिमं वचः ।
तमुद्दिश्याब्रवीद्यत्तत् सर्पस्य विषमुल्बणम् ॥ ३९५ ॥

प्रशासनेनोपकृतः पुरा तदपि द्रुह्यसि ।
तस्मै तस्मात्कृतघ्नोऽसि दावरस्तमुवाच ह ॥ ३९६ ॥

मनस्ते दुर्विचारेण संजातं रोगजर्जरम् ।
प्रशंससि त्वं लोकानां संहन्तृ स्फोटकायुधम् ॥ ३९७ ॥

अपराधाश्च ते घोराः भारतस्यापकारकाः ।
निष्कासनं यावदायुः शासनेन विधीयते ॥ ३९८ ॥

सेवको भारतस्यास्मि बहुवारं प्रभाषसे ।
हिताय तस्य मन्येऽहं त्वद्धिताय तथैव च ॥ ३९९ ॥

देशाद् बहिर्निवासस्ते भवेत् षाड्वार्षिकः खलु ।
कारागारेऽपराधाय प्रत्येकं च द्वयोस्तव ॥ ४०० ॥

युगपद् यापितव्यौ तु दण्डकालावुभावपि ।
तृतीयस्यापराधस्य कृते दद्यात्सहस्रकम् ॥ ४०१ ॥

तिलको रूप्यकाणां वै यमराजसहोदरः ।
दावरस्तिलकं प्राह न्यायमूर्तिपदस्थितः ॥ ४०२ ॥

घोषयन् घोरदण्डस्य समादेशं बहिर्गतः ।
न्यायालयाद् न्यायमूर्तिर्गन्तुकामो गृहं प्रति ॥ ४०३ ॥

वाहनेन ततो नीतस्तिलकः स्वास्थ्यरक्षकैः ।
सैनिकैः स्थानमज्ञातमनपेक्षितवर्त्मना ॥ ४०४ ॥

तिलकं द्रष्टुकामाश्च मुम्बानगरवासिनः।
अदृष्ट्वा तं मध्यरात्रे निवृत्ताश्च निराशया ॥ ४०५ ॥

अवर्षति यथा मेघे चातका भग्नमानसाः।
आवासं तृषिता यान्ति दुःखस्तिमितबुद्धयः ॥ ४०६ ॥

अश्रुपूर्णेक्षणाः केचिच्छ्रुत्वा दण्डं भयावहम्।
तदाहुस्तिलकं पुण्यं न पश्यामो पुनर्वयम् ॥ ४०७ ॥

कृतापाया भारतीयप्रजा बालस्य दण्डनात्।
राज्ञा कृतात्कठोराद् वै भारतस्यान्तरात्मनः ॥ ४०८ ॥

न्याय्याद् मार्गादपेतेषु शासनस्याधिकारिषु।
शीघ्रं भवेद् दृढमपि शासनं पतनोन्मुखम् ॥ ४०९ ॥

कृमिभक्षणनिःसत्त्वो विशालः पादपो यथा।
गुप्तामयो विषक्षीणः प्राणी पुष्टोऽपि वा यथा ॥ ४१० ॥

अनिष्टं चिन्तयन्तश्च शासनस्याधिकारिणाम्।
उच्चैस्तेभ्यः शपन्तश्च स्वालयं प्रेक्षका गताः ॥ ४११ ॥

कुलाबास्थानकं नीतं वाहनं तिलकस्य वै।
प्राविशत्तिलकस्तत्र विशेषं वह्निवाहनम् ॥ ४१२ ॥

दूरस्थिते ह्येकदेशे स्थानकस्याङ्गणे रथः।
प्रस्थितस्तत्स्थलाच्छीघ्रं प्रविष्टे तिलके सति ॥ ४१३ ॥

संप्राप्तोऽहमदाबादं काले पूर्वनियोजिते।
नैव किंचित् स्थलं यातं तिलकस्य तु दृक्पथम् ॥ ४१४ ॥

आसन् पिहितपक्षाणि द्वारवातायनानि वै।
वाहनस्य विशेषस्य लोहमार्गानुगामिनः ॥ ४१५ ॥

ततो बन्दिजनागारं निन्युस्तं कर्मचारिणः।
अधिकारिसमादेशात् साबरमत्यभिसंज्ञितम् ॥ ४१६ ॥

न्यायमूर्तेर्वचः श्रुत्वा निश्चितं न्यायमन्दिरे ।
नयामीत्यन्तमद्यैव न्यायप्रकरणं किल ॥ ४१७ ॥

अवलोक्य जनाः सर्वे यद् यज्जातं दिनेऽन्तिमे ।
अनुमानं निर्णयस्य चक्रिरे सूक्ष्मदर्शिनः ॥ ४१८ ॥

तथैव निर्णयात् पूर्वं सूचनामधिकारिणे ।
न्यायमूर्तिर्ददौ स्वस्य प्रतिकूलमतस्य वै ॥ ४१९ ॥

शासनस्य विनिश्चेतुं न्यायमूर्तिः समुद्यतः ।
अनुकूलं योजनायाः समयं निर्णयस्य च ॥ ४२० ॥

भूमिका निःस्पृहत्वस्य न्यायाधीशेन दूषिता ।
इति दृष्टं जनैः स्पष्टं मुम्बापुरनिवासिभिः ॥ ४२१ ॥

गुप्तमन्त्रोऽपि षट्कर्णो भिन्नो ज्ञातं जनैः किल ।
निशायां तिलको यत्र नीतो बाष्परथस्थितः ॥ ४२२ ॥

भागिनेयश्च बालस्य गतो द्रष्टुं स्वमातुलम् ।
स्वाक्षरीप्राप्तये तस्य न्यायसङ्ग्रामसिद्धये ॥ ४२३ ॥

ददर्श तिलकं धोंडो नित्यवेषेण भूषितम् ।
तदर्थमन्नमानीतं कारारुग्णालयात् तदा ॥ ४२४ ॥

कदन्नं नाहमश्नामि दत्तं बन्दिजनाय यत् ।
तनुस्वास्थ्याय तिलकः प्राह तत्राधिकारिणम् ॥ ४२५ ॥

प्रत्यागते धुण्डिराजे दावस्य विनिर्णयम् ।
प्रत्याख्यातुं प्रार्थिपत्रमर्पितं न्यायमन्दिरे ॥ ४२६ ॥

सप्तेंबरे द्वितीयेऽह्नि पक्षयोः प्रतिपादनम् ।
तत्संपूर्णं न्यायपीठमशृणोदुभयोरपि ॥ ४२७ ॥

अधिवक्ता शासनस्याभवद् रावर्दसनाभिधः ।
तिलकस्य च बाप्टिष्टा विधिशास्त्रविशारदः ॥ ४२८ ॥

स्काटब्याचलरौ न्यायपीठस्थौ विदुषां वरौ ।
अभिश्रोतुं द्वन्द्विभाष्ये न्यायदानाय तस्थतुः ॥ ४२९ ॥

निर्णयं तौ जुघुषतुर्दिने सप्तेंबरेऽष्टमे ।
संक्षेपेण प्रवक्ष्यामि नैराश्योद्वेगकारकम् ॥ ४३० ॥

प्रतिपक्षोत्तरार्थं यः समादेशः प्रवर्तितः ।
निराकृतस्तदा ताभ्यामभावात् कारणस्य तु ॥ ४३१ ॥

तथाप्यादिशतां तौ हि दावरस्य विनिर्णये ।
शोधनं प्रतिकूलं यत् संकेतस्य कृतस्य च ॥ ४३२ ॥

तृतीयस्यापराधस्य निर्दोषस्तिलकोऽभवत् ।
दण्डः सहस्ररूप्याणामुचितो नेति तन्मतम् ॥ ४३३ ॥

नावैधमपि दोषित्वं संकेतस्य विरोधि च ।
निराकार्यं दयां कृत्वा शासनेनेति सूचितम् ॥ ४३४ ॥

स्वीकृत्य सूचनां तां वै दयादेशं तदा ददे ।
न देया रूप्यसाहस्री बालेन न्यायनिर्णये ॥ ४३५ ॥

तृतीयस्यापराधस्य दण्डार्थं यद् विनिश्चितम् ।
प्रशासनेन च क्षान्तः सोऽपराधोऽपि सर्वथा ॥ ४३६ ॥

उपर्युक्तप्रकारेण न्यायदानस्य नाटकम् ।
भारतेऽस्मिन् समाप्तं हि शोकदुःखान्तकं महत् ॥ ४३७ ॥

उदिते शुश्रुवुर्लोका अर्के वार्तां सुदुःसहाम् ।
बन्दिनिर्वासनस्यास्य षडब्दस्य महात्मनः ॥ ४३८ ॥

बालस्याभूत्तदा दूरं गुलरीत्या स्थलं प्रति ।
नयनं लोहमार्गेण चाज्ञातं संशयास्पदम् ॥ ४३९ ॥

दुःखोद्वेगेन संमूढा लोका वै खिन्नमानसाः ।
कार्यालयमगत्वा ते संतताः स्वगृहे स्थिताः ॥ ४४० ॥

नोद्घाटितानि पण्यस्य वेश्मानि व्यवसायिभिः ।
क्रयविक्रयराहित्यं मुम्बापुर्यामभूद् महत् ॥ ४४१ ॥

नासीद् वाहनसंचारो कुत्रापि नगरे तदा ।
यन्त्रालयाश्च विरता अभावात् कर्मचारिणाम् ॥ ४४२ ॥

पुण्यपुर्यां महाराष्ट्रविदर्भनगरेष्वपि ।
उद्यमस्य विरामोऽभूत् सर्वकार्यालयेषु च ॥ ४४३ ॥

विरेजे पुण्यपुर्यां वै श्मशान इव शान्तता ।
सरोजिनी भारतस्य कवयित्र्यलिखत् स्वयम् ॥ ४४४ ॥

सुदूरं तिलके नीते चैतन्यं निर्जगाम हि ।
महाराष्ट्रस्य देहेस्मिन्नवशिष्टं जडं किल ॥ ४४५ ॥

ग्रामे ग्रामे जनपदे पत्तने पत्तने तदा ।
सभासु भारते लोकैः शासनं च निषेधितम् ॥ ४४६ ॥

लोकक्षोभप्रकारेण क्रुद्धं शासनमण्डलम् ।
पराङ्मुखान् जनान् कर्तुं प्रयेते वै निदर्शनात् ॥ ४४७ ॥

तदाश्मक्षेपणं लोकैः कृतं नैकस्थलेष्विति ।
प्रतिकर्तुं समादिष्टमग्नियन्त्रस्य स्फोटनम् ॥ ४४८ ॥

यत्नस्तेषामभूद् व्यर्थो मुम्बापुर्यां यदा तदा ।
बहुशश्चाग्नियन्त्रं हि तदर्थमुपयोजितम् ॥ ४४९ ॥

आहता आयुधैः केचित् केचिद् मृत्युपथं गताः ।
पञ्चसप्ततिसंख्याका मुम्बापुर्यां जना हताः ॥ ४५० ॥

एकसप्ताहपर्यन्तं दृष्टं भैरवताण्डवम् ।
भीषणं नगरे नृत्यमासीत् क्षुब्धाधिकारिणाम् ॥ ४५१ ॥

साबरमतीसंप्रवेशादेकपक्षादनन्तरम् ।
बन्दिवेषं ददौ तस्मै तिलकाय निरीक्षकः ॥ ४५२ ॥

अन्नं बन्दिजनस्यैव तत्स्वास्थ्यापायकारकम् ।
तेन वै स्वल्पकालेन शरीरं कृशतां गतम् ॥ ४५३ ॥

प्रदीर्घं चिन्तनं कृत्वा शासनेनेति निश्चितम् ।
मंडालेबन्दिसद्मैव ब्रह्मदेशे सुरक्षितम् ॥ ४५४ ॥

षाड्वार्षिकनिवासाय कारागारे महात्मनः ।
प्राप्नोदनुमतिं तच्च ब्रह्मदेशप्रशासनात् ॥ ४५५ ॥

त्रयोदशदिने रात्रौ मासि सप्तेंबराभिधे ।
वह्निवाहनमार्गेण साबर्मत्याः प्रतस्थिरे ॥ ४५६ ॥

हार्डिंजनाविकोऽजानात्प्रस्थानानन्तरं खलु ।
गम्यस्थलं प्रवासस्य पठित्वा गुप्तपत्रकम् ॥ ४५७ ॥

प्राप्तं दिनाङ्के द्वाविंशे रंगूनं जलवाहनम् ।
द्विसहस्रं जनास्तत्र दर्शनार्थं समाययुः ॥ ४५८ ॥

दूरादेव च दृष्टस्तैर्लोकमान्यः समुत्सुकैः ।
नीतोऽयमञ्जसा स्थानं स्थितं यन्त्राग्निवाहनम् ॥ ४५९ ॥

प्राविशत् तिलकस्तद्वै सहचारिजनैः सह ।
दृष्ट्वा लोहितमुष्णीषं स्वागतं चक्रिरे जनाः ॥ ४६० ॥

जयघोषस्वनैरुच्चैस्तिलकोच्चारपूर्वकैः ।
निनादितं जनैर्ब्रह्मदेशस्याकाशमण्डलम् ॥ ४६१ ॥

प्रतस्थेऽग्निरथश्चासौ ततोऽदृष्टिपथं ययौ ।
तिलकः सहसूर्यश्च रंगूनेऽस्तं गतस्तदा ॥ ४६२ ॥

प्रापुर्मंडालयं वह्निवाहनेनाष्टवादने ।
प्रभाते तिलको नीतः शीघ्रं तं बन्धनालयम् ॥ ४६३ ॥

न दत्तोऽवसरः पत्नीपुत्रादीनां महात्मनः ।
नेत्राभ्यां दर्शनस्यापि दीर्घाध्वप्रस्थितस्य वै ॥ ४६४ ॥

षड्वर्षजीवनं तत्र दिव्यं मुनिजनोचितम् ।
वर्णयिष्ये यथाकालं कृतार्थस्य जगद्गुरोः ॥ ४६५ ॥

अहो क्रौर्यमहो द्वेषो बत दुर्बुद्धिभावना ।
सत्पात्रे विदुषां पूज्ये ब्रिटनस्याधिकारिणाम् ॥ ४६६ ॥

त्यक्त्वा राज्यसुखं विवेश गहने रामो यथा कानने
मत्वेष्टं सुरकार्यसाधकमिदं सापत्नमातुर्वचः ।
तद्वद् भारतमोचनाय च भवेदाङ्ग्लस्य पाशाद् मम
कारावास इति प्रदीर्घसमयो देशाद् बहिः प्रस्थितः ॥ ४६७ ॥

तत्त्वज्ञः श्रुतिमर्मविच्च तिलको योगेश्वरो यो मतो
वेदाभ्यासपटुः प्रदीप्तविमलज्ञानप्रकाशो मुनिः ।
संसारे मनुजस्य जन्ममरणावृत्तेर्विनाशस्य स
नित्यं कर्मरतस्य साधनमिदं मंडालयेऽचिन्तयत् ॥ ४६८ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे न्यायदाननाटकं नाम सप्तत्रिंशस्तरङ्गः ।

## अष्टात्रिंशस्तरङ्गः

स्वतेजोभिरहृद्योऽपि हितायैव विवर्धते ।
भूरादिसप्तलोकानां जलदाच्छादितो रविः ॥ १ ॥

आसीद् मंडालये तद्वत् काराभित्तिभिरावृतः ।
तिलकोऽध्वरकुण्डस्थः स्फुलिङ्ग इव षट् समाः ॥ २ ॥

तपसे निर्गतो दूरं गहने गिरिगह्वरे ।
गाङ्गाधरिः पुण्यपुर्यां मन्ये विश्वहिताय सः ॥ ३ ॥

कारालयोऽभवत् तत्स्थः पावनः शुचिराश्रमः ।
सरस्वत्याः कण्ठमणिस्तिलको मुनिपुंगवः ॥ ४ ॥

काङ्क्षन्त्यः स्नेहसंबन्धं विद्याः सत्वरमाययुः ।
तदाश्रमपदं पूतं दधाना द्युतिमद्भुताम् ॥ ५ ॥

आरण्यकब्राह्मणोपनिषद्भिः सह पावनाः ।
षडङ्गसहिता वेदाः सभाष्या उपतस्थिरे ॥ ६ ॥

साङ्ख्यवैशेषिकन्याययोगा मीमांसयोर्द्वयम् ।
प्रोक्तानि मुनिभिः प्रापुर्दर्शनानीतराणि च ॥ ७ ॥

आगच्छन् स्मृतयः सर्वा मन्वादिमुनिवर्णिताः ।
पताका या निवृत्तेश्च प्रवृत्तेरपि दर्पणाः ॥ ८ ॥

कुरुवंशस्येतिहासो महाभारतसंज्ञकः ।
रामायणाभिधः श्रेष्ठः सूर्यवंशस्य चापरः ॥ ९ ॥

व्यासवाल्मीकिवक्त्राभ्यां निःसृतावुपकारकौ ।
संसारबद्धजीवानां प्रेयःश्रेयोऽभिलाषिणाम् ॥ १० ॥

कथाम्बरेण पीतेन नयनानन्ददायिनौ ।
शोभिनौ प्रापतुः स्थानं पुण्यं मंडालयस्थितम् ॥ ११ ॥

ऋषिभ्यः शौनकादिभ्यः प्रोक्तान्यध्वरमण्डपे ।
सूतेन नैमिषारण्ये पुराणानि समाव्रजन् ॥ १२ ॥

विद्यावाचस्पतिं पुण्यं संद्रष्टुं कर्मयोगिनम् ।
मंडालये ब्रह्मदेशे कारावासतपोरतम् ॥ १३ ॥

पुञ्जीभूतानि तेजांसि निवासे तमसावृते ।
कारागारस्यैकदेशे तिलकस्य तपस्विनः ॥ १४ ॥

पूर्वपश्चिमविद्यानां नन्वाकाशे चकाशिरे ।
क्षपासु तारकाभाभिर्दिवसेष्वर्कवर्चसा ॥ १५ ॥

श्रव्यकाव्यप्रणेतारो दृश्यकाव्येश्वरास्तथा ।
कालिदासादयः प्रापू रसालंकारभूषणाः ॥ १६ ॥

देशभाषाद्यसूरीणां जाता सम्यगुपस्थितिः ।
नामघोषाद् विट्ठलस्य दिशः सर्वा निनादिताः ॥ १७ ॥

पंढरीक्षेत्रमेवाभूद् मंडालेबन्धनालयम् ।
वीणामृदङ्गवाद्यानां ध्वनिभिः परिपूरितम् ॥ १८ ॥

भावार्थदीपिकावक्ता ज्ञानेशो ज्ञानविग्रहः ।
एकनाथतुकारामनामदेवाभिवन्दितः ॥ १९ ॥

भक्तिरेव समायाता परप्रेमानुवर्तिनी ।
सरहस्यं चाधिगन्तुं ज्ञानकर्मसमन्वयम् ॥ २० ॥

गुरुशुक्रार्यचाणक्या राजनीतिविशारदाः ।
हेमाद्री रामदासश्च सुज्ञौ सायणमाधवौ ॥ २१ ॥

अलंचक्रुरुपस्थित्या स्थानं कारागृहस्थितम् ।
तिलकस्य ब्रह्मदेशे बुद्धधर्मानुयायिनि ॥ २२ ॥

षट् समा यापयामास संवादे ज्ञानिभिः सह ।
ग्रन्थरूपधरैर्नित्यं तिलको बन्धनालये ॥ २३ ॥

वार्तालापस्य निष्कर्षः पावनः काष्ठमन्थनात् ।
राजते ग्रन्थराजे हि दीपितोऽग्निरिवाध्वरे ॥ २४ ॥

भगीरथप्रयत्नेन गङ्गानीता यथा भुवि ।
तथा तिलकयत्नेन कर्मयोगसरिद् दिवः ॥ २५ ॥

भारतं पातुमायाता पतितं सङ्कटोदधौ ।
सन्मार्गदर्शकाभावाच्चिरं दिङ्मूढतां गतम् ॥ २६ ॥

सांप्रदायिकटीकाभिर्मूर्च्छिता कृष्णभारती ।
रहस्यस्य प्रकाशेन संलेभे प्रकृतिं पुनः ॥ २७ ॥

कर्मणा जायते जन्तुः कर्मण्येव विलीयते ।
कर्मणैव समाप्नोति पदं संसिद्धिसंज्ञकम् ॥ २८ ॥

निष्कामकर्मणो मार्गः सेवितो जनकादिभिः ।
श्रेयान् संन्यासिनो मार्गादिति ग्रन्थेषु वर्णितम् ॥ २९ ॥

तिलकेन समालोच्य शास्त्राणि च श्रुतिस्मृतीः ।
इतिहासपुराणानि ज्ञानिनां च मतान्यपि ॥ ३० ॥

युरोपामेरिकाखण्डवासिनां सत्यदर्शिनाम् ।
उद्धाराय गृहस्थानां निरतानां स्वकर्मसु ॥ ३१ ॥

एकं कथानकं दृष्टं रहस्योत्पत्तिदर्शकम् ।
बालप्रणीतयज्ञस्य स्वप्ने तद् वर्णयाम्यहम् ॥ ३२ ॥

सत्रं हि ज्ञानयज्ञस्य पञ्चसंवत्सरात्मकम् ।
मन्ये तिलक आरेभे दीक्षितः श्रुतिपारगैः ॥ ३३ ॥

उपस्थितैर्ज्ञानिवर्यैर्ग्रन्थरूपैर्विचक्षणैः ।
मीमांसकैर्ब्रह्मनिष्ठैर्वृतैरार्त्विज्यकर्मसु ॥ ३४ ॥

उद्गाता सामवेदोऽभूद् होतर्ग्वेदोऽभवत्तदा ।
अध्वर्युश्च यजुर्वेदो ब्रह्मा चाथर्वणोऽभवत् ॥ ३५ ॥

आलम्भनाय यूपस्थः पशुः पाखण्डदर्शनम् ।
त्रयोऽग्नयो ब्राह्मणाश्च शिक्षाद्या वै समित्समाः ॥ ३६ ॥

सवनायोचिते काले सोमश्चोपनिषद्रसः ।
अवभृथाय संप्राप्ता गीता पापौघनाशिनी ॥ ३७ ॥

पूर्णाहुत्या झटित्यासीच् शङ्का भस्मशरीरिणी ।
आविरासीत्ततः कुण्डाद् गीतादेवी वरप्रदा ॥ ३८ ॥

अवदत् सा नरश्रेष्ठ संतुष्टाहं तपस्यया ।
ददामि हृदयं तुभ्यं मे लोके तत् प्रकाशय ॥ ३९ ॥

गीतामयोऽभवद् बालस्तन्वा च मनसा धिया ।
प्रवक्ता कर्मयोगस्य रहस्यस्य समीक्षकः ॥ ४० ॥

मन्येऽस्मत्स्वप्नतात्पर्यं प्रतिभा देवकीसुतात् ।
संप्राप्ता ग्रन्थकर्तृत्वे तिलकेन महात्मना ॥ ४१ ॥

स्वरूपं कर्मणो जन्तोः परिस्थित्या नियम्यते ।
कर्तव्यमिति तत् प्रोक्तं प्राप्तस्य परिपालनम् ॥ ४२ ॥

पक्षिणां हृदये चिन्ता व्योम्नि संचारतामपि ।
बालकानां सुरक्षाया नीडस्थानां यथा तथा ॥ ४३ ॥

पत्रेभ्यस्तिलकस्यैव ज्ञायते तन्मनोव्यथा ।
अध्यात्मचिन्तने मग्नं चित्तं कारागृहे यदि ॥ ४४ ॥

चिन्तां संचालनस्यापि स उवाह स्वपत्रयोः ।
व्याधेः स्वधर्मपत्न्याश्च शिक्षायाः पुत्रयोरपि ॥ ४५ ॥

लिलेख तिलकः पत्रमेकमेव गृहं प्रति ।
प्रतिमासं समादृत्य काराधीशानुशासनम् ॥ ४६ ॥

संगृहीतानि पत्राणि केसरीपुस्तकालये ।
सुस्थितानि महार्हाणि जयन्तेन सुबुद्धिना ॥ ४७ ॥

ब्रह्मदेशं यदा नीतो भारतात् तिलको बहिः ।
पुण्यपुर्यां गृहे पत्नी सापत्या दुःखितावसत् ॥ ४८ ॥

वयसाल्पौ सुतावास्तां विद्यालाभाभिकाङ्क्षिणौ ।
पितुर्वियोगदुःखेन विषण्णौ सततं हृदि ॥ ४९ ॥

अग्रजो रामचन्द्राख्यश्चानुजः श्रीधराभिधः ।
श्रीधरस्य सुतो ज्येष्ठो जयन्तोऽस्ति बहुश्रुतः ॥ ५० ॥

आत्मैव पत्ररूपेण केसरीमन्दिरे स्थितः ।
बालस्य कर्मचारिभ्यः दातुं कर्तव्यचोदनाम् ॥ ५१ ॥

संग्रहः पत्रलेखानां करोत्येव यथातथम् ।
गृहिणस्तिलकस्यैव भावनानां प्रदर्शनम् ॥ ५२ ॥

गृहस्थाश्रमकर्तव्यक्षेत्रमत्यन्तविस्तृतम् ।
करोति भूमिका बह्वीरेक एव यथा नटः ॥ ५३ ॥

एकदा पुत्ररूपेण पतिरूपेण वा पुनः ।
पितृरूपेण धत्ते वै भूमिकाश्च समुज्ज्वलाः ॥ ५४ ॥

मित्ररूपेण बध्नाति स्नेहग्रन्थीन् विशेषतः ।
गृहस्वामीति सर्वेषां यत्नशीलः सुखाय च ॥ ५५ ॥

उत्पद्यन्ते यथा सिन्धौ वीचयो वायुरंहसा ।
उत्पद्यन्ते व्यक्तिचित्ते भावाश्च विविधास्तथा ॥ ५६ ॥

गृहस्थाश्रमकर्तव्यसंभूतास्तिलकस्य ये ।
भावास्तेषां दर्शनाय दर्पणः पत्रसंग्रहः ॥ ५७ ॥

सत्यभामाभिधा भार्या सुशीला मितभाषिणी ।
गृहकृत्ये सदा मग्ना पापभीरुः पतिव्रता ॥ ५८ ॥

आचचार च सा भक्त्या कुलस्त्रीव्रतमुत्तमम् ।
श्रुतिस्मृतिपुराणेषु शंसितं यद् महर्षिभिः ॥ ५९ ॥

कदर्यद्रव्यवत् तस्या दुर्लभं वचनं सदा ।
समादृतैरतिथिभिः कुटुम्बे स्वजनैस्तथा ॥ ६० ॥

अन्यगृहे पदन्यासं सर्पमूर्ध्नीव दुःसहम् ।
मत्वा सा न विना कार्यं प्रयाता स्वगृहाद् बहिः ॥ ६१ ॥

मेने सा स्वं पतिं देवं तत्सेवा देवपूजनम् ।
दीपं च केसरीपत्रं तद्गृहं सुरमन्दिरम् ॥ ६२ ॥

क्वचिदेव गता ग्रामदेवतादर्शनाय सा ।
विवाहादेर्निमित्तेन देवानामुत्सवस्य वा ॥ ६३ ॥

दुःखिता पतिदुःखेन प्रकृत्या सुदृढापि सा ।
आधिभिः पीडिता दीर्घं कृशाभूद् व्याधिजर्जरा ॥ ६४ ॥

ग्रस्ताया मधुमेहेन कृशत्वादस्थिपञ्जरम् ।
अभूद् यष्टिः शरीरस्य कष्टसाध्यामयस्थितिः ॥ ६५ ॥

पठित्वा धुण्डिपत्रे तच्च शोकसंविग्नमानसः ।
तिलकः सूचयामास भेषजं वैद्यसंमतम् ॥ ६६ ॥

तथापि कथयामास कुर्यादगदयोजनाम् ।
गदैऽभिधो भिषग्वर्यो दास्यत्यनुमतिं यदि ॥ ६७ ॥

आरोग्यावाप्तयेऽवश्यं पथ्यान्नस्याशनं सदा ।
स्वपत्रे तिलकेनोक्तं मतं शास्त्रविदामिति ॥ ६८ ॥

गत्वा सिंहगडं तत्र वस्तव्यं स्वास्थ्यहेतुना ।
जनस्य क्षीणदेहस्य शीतं ग्रीष्मे हितप्रदम् ॥ ६९ ॥

निवेदयाम्यहं सर्वं ज्ञातं स्वानुभवेन यत् ।
आमयो मधुमेहोऽयं मच्छरीरे स्थितश्चिरम् ॥ ७० ॥

यवान्नभोजनाज्जाता तद्दोषस्य निराकृतिः ।
जिह्वालौल्यविरक्तस्य कारागारस्थितस्य मे ॥ ७१ ॥

न कर्तव्या शरीरस्थरोगोपेक्षा त्वयाधुना ।
पुष्टितुष्टिविवृद्ध्यर्थं रामश्रीधरयोः किल ॥ ७२ ॥

स्वपतौ बन्धनागारे शासनेन हि रोधिते ।
भार्या सुखं परित्यज्यापूजयद् देवतामसौ ॥ ७३ ॥

आरोग्याय च मोक्षाय पतिदेवस्य बन्धनात् ।
न सा चक्रे कदा चिन्तामात्मस्वास्थ्यसुखस्थितेः ॥ ७४ ॥

गता अब्दास्त्रयस्तस्या औषधग्रहणं विना ।
दृढमूलोऽभवद् व्याधिर्नैराश्येन प्रवर्धितः ॥ ७५ ॥

आयातः पञ्चमो जार्जो भारतं भूपतिर्यदा ।
स्वागताय तदा जात इन्द्रप्रस्थे महोत्सवः ॥ ७६ ॥

संस्थानस्वामिनः सर्वे राजमान्या नरास्तथा ।
निमन्त्रिताः समाजग्मुर्देहलीं तं दिदृक्षवः ॥ ७७ ॥

न्यायाधीशैर्यथान्यायं दण्डिता अपराधिनः ।
विमोचिता बन्धनाद् वै शतशश्च सहस्रशः ॥ ७८ ॥

नरहत्यादिदोषाणां कर्तारोऽपि विमोचिताः ।
पूर्वं विहितकालस्य दयया चक्रवर्तिनः ॥ ७९ ॥

नामावल्यां विमुक्तानामभावः स्वपतेरिति ।
विज्ञाय सापतद् भूम्यां नैराश्यग्रस्तमानसा ॥ ८० ॥

स्पृष्ट्वाहाङ्गुलिना भालं हन्ताहं हतभागिनी ।
ततः परं स्थिरा तस्या रुग्णशय्यासनस्थितिः ॥ ८१ ॥

प्रायशस्तद्दिनाद् देवी देहरक्षापराङ्मुखी ।
कृतप्रायोपवेशेव दुर्धरं व्रतमाचरत् ॥ ८२ ॥

द्वावेवास्तामुपायौ मद्देहरोगोपशामकौ ।
पत्युः कारागृहाद् मोक्षो देहागारान्ममाथवा ॥ ८३ ॥

कथयामास सा देवी धोंडोपंतं धृतव्रता ।
पत्राणां च कुटुम्बस्य व्यवस्थायां सदा रतम् ॥ ८४ ॥

संभवो हि विमोक्षस्य दयया चक्रवर्तिनः ।
इन्द्रप्रस्थसमारोहपर्वण्यस्तीति शोभने ॥ ८५ ॥

चिन्तितं तिलकेनापि मनसीत्यनुमीयते ।
तेन प्रेषितपत्रेभ्यः कारागाराद् गृहं प्रति ॥ ८६ ॥

कारागृहनिबद्धानां दयया बन्धमोचनम् ।
महोत्सवनिमित्तेन करोत्येव नराधिपः ॥ ८७ ॥

शंसन्ति तं प्रजाः सर्वाः पुण्यकर्मकृतं नृपम् ।
शिष्टमान्यसदाचारसंप्रदायानुसारिणम् ॥ ८८ ॥

मित्रवर्यगणेशाय तिलकेनैव सूचितम् ।
इन्द्रप्रस्थसमारोहे यतितव्यं विमुक्तये ॥ ८९ ॥

संभवे राजपुत्रस्य राज्यारोहणपर्वणि ।
आहवे च जयप्राप्तौ प्रजाराधनतत्परः ॥ ९० ॥

संतोषाय च लोकानां कुर्याद् राजा महोत्सवम् ।
दद्याच्च धर्मकृत्यार्थं पात्रेभ्यो विपुलं धनम् ॥ ९१ ॥

द्रव्यदानं कलाविद्भ्यः क्षुधितेभ्यश्च भोजनम् ।
न्यायालये दण्डितानां भवेदेव विमोचनम् ॥ ९२ ॥

विपद्दैन्यक्लेशहानिपरिहाराय भूपतिः ।
प्रजानां यततामस्मिन्नुत्सवे हर्षनिर्भरः ॥ ९३ ॥

पुण्यकर्मरता भूपास्त्यजन्ति क्षुद्रभावनाः ।
दर्शयन्ति च सौहार्दं विन्दन्त्यन्ते परं पदम् ॥ ९४ ॥

संस्मृत्य शास्त्रवाक्यानि शिष्टाचारं परंपराम् ।
औचित्यं च कृतो यत्नस्तिलकस्य विमुक्तये ॥ ९५ ॥

मित्रैराङ्ग्लयुरोपीयैर्भारतीयैश्च सज्जनैः ।
वेदशास्त्रादिपौरस्त्यविद्याऽभ्यासङ्गकारिभिः ॥ ९६ ॥

शासनस्य तु मुम्बय्या विरोधाद्विफलोऽभवत् ।
उक्तमेतद् राजविद्याराजगुह्यविचक्षणैः ॥ ९७ ॥

प्रसन्नहृदयः सम्राट् संदधे शकलद्वयम् ।
भग्नवङ्गस्य रोषस्य चकारान्तं कृपानिधिः ॥ ९८ ॥

आज्ञापितस्तदा मोक्षः कारागृहनिवासिनाम् ।
सहस्राधिकसंख्यानां पापवर्त्मानुगामिनाम् ॥ ९९ ॥

सम्राड्दयाविमुक्तेषु तिलको न हि विद्यते ।
ज्ञात्वा जना ददुः शापमाङ्ग्लेभ्यः क्षुब्धचेतसः ॥ १०० ॥

आङ्ग्लानामल्पकालेन साम्राज्यं वै विनश्यति ।
अदण्ड्यदण्डपापेन दूषितं लुप्तवैभवम् ॥ १०१ ॥

आकर्ण्याशुभवार्तां तामापेदे खिन्नतां क्षणम् ।
स्थितप्रज्ञः पुनः प्राप तिलकः प्रकृतिं निजाम् ॥ १०२ ॥

मिताक्षरैः कृतं तेन मनोव्यापारदर्शनम् ।
कालपूर्वं भवेद् नैव कारागाराद् विमोचनम् ॥ १०३ ॥

यापयामि यथापूर्वं शिष्टं वर्षद्वयावधिम् ।
पारायणेन वेदानां सभाष्याणामहर्निशम् ॥ १०४ ॥

उद्भूता महती चिन्ता तिलकस्य तदा हृदि ।
कथं पत्नी क्षमा सोढुं निराशावज्रताडनम् ॥ १०५ ॥

एकायनं व्यतीयाय समारोहादनन्तरम् ।
पत्न्याः पुणेनिवासिन्या व्याधिर्दुःसाध्यतां गतः ॥ १०६ ॥

षष्ठे मासि शके खैस्ते सूर्यग्रहधरामिते ।
अष्टमे दिवसे पत्नी तिलकस्य दिवंगता ॥ १०७ ॥

विज्ञातं तद् वैद्युतेन संदेशेन महात्मना ।
पुण्यग्रामात् प्रेषितेन भागिनेयेन धुण्डिना ॥ १०८ ॥

भिन्नं चेतो वज्रसारं तिलकस्यापि तत्क्षणम् ।
दृढमूलो यथा वृक्षो भिद्यते तडिदाहतः ॥ १०९ ॥

बह्व्यः सोढा हि मानुष्या दैव्याश्चाप्यापदो मया ।
निजायुषो गते काले नानासङ्कटसङ्कुले ॥ ११० ॥

हृदये न प्रादुरासीद् वेपथुर्मे कदाचन ।
प्रचण्डे वायुवेगे मे दुर्गवद् हृदयं स्थिरम् ॥ १११ ॥

गतः पिता गता माता पुत्रमित्रादयो गताः ।
तेषां शोकेन विगतं न स्थैर्यं हृदयस्य मे ॥ ११२ ॥

प्रशासनविरोधे वै व्यतीतं मम जीवितम् ।
तन्निर्मितविपद्भिश्च हृदयं मे न कम्पितम् ॥ ११३ ॥

द्वेषिभिर्विषमे काले पिशुनैः क्षुद्रदृष्टिभिः ।
प्रवर्तितेषु विघ्नेषु न मेऽभूद् हृदि विक्रिया ॥ ११४ ॥

परंतु मृत्योर्भार्याया वार्तयाशुभया गतम् ।
हृदयं स्वल्पकालं तद् वशतां शोकमोहयोः ॥ ११५ ॥

श्रीधरो रामचन्द्रश्च निराधारौ सुतौ मम ।
बभूवतुः प्रयाणेन मातुर्देवगृहं प्रति ॥ ११६ ॥

धुण्डिराजो न शक्नोति कर्तुं शोकनिराकृतिम् ।
अप्राप्तप्रौढवयसोर्दीनयोः सुतयोर्मम ॥ ११७ ॥

सहेतां तौ कथं दुःखं पश्येतां प्रेमलौ च कम् ।
न दृश्यते समीपस्थस्तयोराप्तोऽथवा सखा ॥ ११८ ॥

भावनाभिः सुतीव्राभिरभवच्च् शोककश्मलम् ।
तिलकस्य मनोमेघपटलेन यथा नभः ॥ ११९ ॥

चण्डस्रोतो भावनानां विचारेण निरोधितम् ।
पाषाणानां सेतुबन्धैर्नदीपूरोदकं यथा ॥ १२० ॥

लिलेख धुण्डिराजं स दुःखावेगेन पीडितः ।
पत्रे दिग्दर्शनं तत्र कृतं तेनात्मनो हृदः ॥ १२१ ॥

ऐच्छत् पत्नी मृत्युपूर्वकाले यत् तद् यथाविधि ।
कर्तव्यं वै ससंस्कारं मृतास्थ्नां च विसर्जनम् ॥ १२२ ॥

यथाशक्ति प्रदीयन्तां दानानि मृततुष्टये ।
शास्त्रप्रोक्तानि विप्रेभ्यः सद्गत्यर्थं मृतस्य वै ॥ १२३ ॥

इत्थं प्रदर्शितं दुःखं गूढं चात्ममनोगतम् ।
धुण्डये पत्रलेखेषु तिलकेन मुहुर्मुहुः ॥ १२४ ॥

साध्वी तिलकपत्नी सा यस्यां रात्रौ दिवं गता ।
पुण्यग्रामे ममाप्यासीत् स्वकार्यार्थमुपस्थितिः ॥ १२५ ॥

अगच्छं केसरीस्थानं कर्तुमन्तिमदर्शनम् ।
प्रेताया अमरस्थानं साध्व्या मित्रजनैः सह ॥ १२६ ॥

उपस्थितेषु मुख्येषु मित्रेष्वाप्तजनेषु च ।
ज्येष्ठेषु च समस्तेषु पुण्यग्रामनिवासिषु ॥ १२७ ॥

संप्रार्थिता मया सर्वे सुजनाः समुपस्थिताः ।
प्रेतयात्रासमारोहः कार्यः समुदिते रवौ ॥ १२८ ॥

प्रेतयात्रानिमित्तेन निरुद्धस्य चिरं हठात् ।
लोकान्तःस्थितदुःखस्य भवतु श्वः प्रदर्शनम् ॥ १२९ ॥

आयान्तु दुःखिताः सर्वे पुण्यग्रामनिवासिनः ।
पुण्यायै बालभार्यायै ददतु श्रद्धयाञ्जलिम् ॥ १३० ॥

आविष्करोतु स्वप्रेम जनः पुण्यपुरीस्थितः ।
असंख्यानामुपस्थित्या श्मशाने श्वो मनःस्थितम् ॥ १३१ ॥

प्रेतायाः सत्यभामाया दर्शनाय समुत्सुकाः ।
असंख्येयाः स्त्रीपुमांसस्तिलकस्यानुयायिनः ॥ १३२ ॥

ग्रस्ता भवन्ति ते सर्वे यदि दाहविधिर्भवेत् ।
रात्रौ तिलकभार्याया सुदुःसहनिराशया ॥ १३३ ॥

वार्ता तिलकभार्याया निधनस्य स्थले स्थले ।
घोषितव्याविलम्बेन केसरीपत्रचालकैः ॥ १३४ ॥

समयः प्रेतयात्रायाः प्रारम्भस्य तथा विधेः ।
श्मशानेऽग्निप्रदानस्य नेतव्यः स श्रुतीन्द्रियम् ॥ १३५ ॥

तिलकस्य न कस्यापि भक्तस्याप्तस्य वा तदा ।
संप्राप्ता मद्विचारस्य संमतिस्तत्स्थले मया ॥ १३६ ॥

लक्ष्मणेन तदा प्रोक्तं रामचन्द्रस्य सूनुना ।
पांगारकरवंश्येन लोके प्रथितकीर्तिना ॥ १३७ ॥

यतः साध्वी सत्यभामा लोकसङ्गपराङ्मुखी ।
नोचितस्तत्प्रेतयात्रासमारोहो भवेदिति ॥ १३८ ॥

अल्पावधौ समारब्धा प्रेतयात्रा गृहात् ततः ।
यातैवान्तं दाहभूमिं प्राप्यौङ्कारसमीपगाम् ॥ १३९ ॥

तत्पुत्राभ्यां विधिः सर्वो विप्रादेशानुसारतः ।
यथाशास्त्रं कृतः पश्चात् प्रतियाता गृहं जनाः ॥ १४० ॥

अनुभूतं महत् कष्टं तदा मानसिकं मया ।
भावशून्यां स्थितिं दृष्ट्वा बुद्धिसंभ्रमकारिणीम् ॥ १४१ ॥

मिलितानां सज्जनानां केसरीपत्रकालये ।
सत्यभामाप्रेतयात्रावह्निसंस्कारकर्मसु ॥ १४२ ॥

पातिव्रत्यतपो यया कलियुगे संपादितं श्रद्धया
सा भार्या तिलकस्य देवसदनं यातेति वार्ता श्रुता ।
सत्कारार्थमरुन्धतीप्रभृतिभिर् ऋष्यङ्गनाभिर्धृतं
पात्रं नीलनभोमयं करयुगे नक्षत्रतारोज्ज्वलम् ॥ १४३ ॥

हस्तं दत्त्वा तां विमानादधस्ताद्
भूमिं दिव्यां देवता आनयन्त ।
शक्रोद्यानोत्फुल्लपुष्पोपचारै-
र्देव्यास्तस्याः स्वागतं चक्रिरे ताः ॥ १४४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे पत्नीवियोगनामाष्टात्रिंशस्तरङ्गः ।



# एकोनचत्वारिंशस्तरङ्गः

विराजते विदर्भेषु पुण्यक्षेत्रं पुरातनम् ।
यत्र जागर्ति विघ्नेशः पृथ्वीविवरमन्दिरे ॥ १ ॥

चिन्तामणिरिति ख्यातो गाणपत्यैः सुपूजितः ।
गणानां त्वेति मन्त्रेण वर्णयामास यं श्रुतिः ॥ २ ॥

पुराणेऽपि गणेशाख्य एकविंशतिमूर्तयः ।
भारते श्रीगणेशस्य विद्यन्त इति वर्ण्यते ॥ ३ ॥

निवारणाय विघ्नानां भक्तानां तारणाय च ।
श्रुतिस्मृतिपुराणोक्तधर्मसंस्थापनाय च ॥ ४ ॥

हृदयं भारतस्यायं विदर्भ इति वर्ण्यते ।
मध्यस्थित्या जनैरस्य दक्षिणोत्तरभागयोः ॥ ५ ॥

विदर्भवरदो देवो नागपूरसमीपके ।
आदाशाख्येऽवसद् ग्रामे विश्ववन्द्यो गजाननः ॥ ६ ॥

चिन्तामणिः कदम्बेऽन्य उवास गणनायकः ।
विदर्भाणां बुद्धिदाता धर्मश्रद्धाप्रचोदकः ॥ ७ ॥

कदम्बक्षेत्रभूः सर्वा सुजला सस्यश्यामला ।
दूर्वाङ्कुरशमीवृक्षबिल्वपादपशोभिनी ॥ ८ ॥

चारुपुष्पफलोद्याना वृन्दावनमनोहरा ।
सुमसौरभसंयुक्ता पद्मगन्धजलाशया ॥ ९ ॥

ग्रामो गोधनसंपूर्णो बलीवर्दनिनादितः ।
दधिदुग्धघृतस्निग्धघटगन्धसुवासितः ॥ १० ॥

नातिदूरे मन्दिरस्य प्रवाहो निर्मलोदकः ।
नित्यं वहति सेवायै देवग्रामनिवासिनाम् ॥ ११ ॥

कदम्बस्योत्तराशायामर्जिठाद्रेरधित्यका ।
यत्राभवत् तृणारण्यं पशुवर्गोदकारकम् ॥ १२ ॥

सकण्टकलतावृक्षचित्रपर्णातिसुन्दरम् ।
चरन्ति पशवस्तत्र महिष्यजगवादयः ॥ १३ ॥

अजापालाः क्षेत्रपाला मालाकाराश्च कर्षकाः ।
कदम्बक्षेत्रसीमायां वसन्ति बहुसंख्यया ॥ १४ ॥

एकः कश्चिदजापालः प्रतिपक्षातिपीडितः ।
तिलकायालिखत् पत्रं भो गुरो वर्त्म दर्शय ॥ १५ ॥

न्यायालयादवाप्त्याशां वञ्चितो हितशत्रुभिः ।
अस्म्यहं वै दीर्घकालात् केसरीपत्रवाचकः ॥ १६ ॥

त्राता नास्ति त्वदन्यो मे व्यसनेऽस्मिन् सुदुर्घटे ।
त्राहि मां त्राहि मां तात भयादस्मादुपस्थितात् ॥ १७ ॥

कदम्बे मन्निवासोऽस्ति दीयतां कृपयोत्तरम् ।
पत्रोत्तरमहं काङ्क्षे सलिलं चातको यथा ॥ १८ ॥

चिन्तामणिं पूजयामि भक्तानां कल्पपादपम् ।
करोमि भोजनं नैव तस्य पूजार्चनं विना ॥ १९ ॥

गाणपत्येषु मुख्यस्त्वं तत्पूजायाः प्रवर्तकः ।
अतस्त्वां शरणं यामि नोपेक्षां कर्तुमर्हसि ॥ २० ॥

तत् पत्रं तिलको लेभे मंडालेबन्धनालये ।
कालेनैवातिदीर्घेण पपाठ च सविस्मयम् ॥ २१ ॥

दृष्ट्वाज्ञानमजापालबन्धूनां ग्रामवासिनाम् ।
न जानन्ति स्थलं कालं वोचितं कार्यसिद्धये ॥ २२ ॥

कृता कालस्य मर्यादा शासने ह्यधिकारिभिः ।
न्यायप्राप्त्यै समागन्तुमिच्छतो न्यायमन्दिरम् ॥ २३ ॥

उक्तकाले प्रदेयं स्यादाक्षेपानां च पत्रकम् ।
अन्यथा तद् निराधारं दृष्ट्या न्यायालयस्य वै ॥ २४ ॥

वायुस्पर्शनिमित्तेन हेमन्ते शिशिरेऽथवा ।
वृन्तश्लथं यथा पर्णं वृक्षस्य पतति क्षमि ॥ २५ ॥

मत्वा विश्वासपात्रं मां याचते मार्गदर्शनम् ।
नोचितं विमुखीकर्तुं केसरीपत्रवाचकम् ॥ २६ ॥

वाक्कीलव्यवसाये यः प्रसिद्धो बापटः सखा ।
वसतीति यवत्माळे स्मृतं बालेन वै तदा ॥ २७ ॥

निवेद्यतां बापटाय संदेशो मम सत्वरम् ।
यदि शक्यं निराकर्तुं कदम्बक्षेत्रवासिनः ॥ २८ ॥

दुःखं प्रयत्नः कर्तव्यो भवद्भिरिति सूचये ।
गङ्गाधरात्मजो बालस्तिलकोऽहं सखा तव ॥ २९ ॥

एवं धुण्डिः समादिष्टस्तिलकेन स्वपत्रके ।
बन्दिशालागतेनापि परदुःखानुकम्पिना ॥ ३० ॥

लक्ष्मणाख्यः पुणेपुर्यां युवा बापटवंशजः ।
यवत्माळं समायातो द्रव्यार्जनचिकीर्षया ॥ ३१ ॥

अर्जितं विपुलं द्रव्यं व्यवसाये यशस्विना ।
संपादिता प्रतिष्ठापि नेतृत्वोचितसद्गुणैः ॥ ३२ ॥

बाललक्ष्मणयोः सख्यमाबाल्यादेव निर्मितम् ।
गतं शुक्लेन्दुवद् वृद्धिं जीवतोरुभयोः सतोः ॥ ३३ ॥

बापटस्याग्रहादेव जातं तिलकदर्शनम् ।
यवत्माळनिवासिभ्यः पूर्वग्रन्थे मयोदितम् ॥ ३४ ॥

बापटे सङ्कटग्रस्ते तिलकः साह्यकारकः ।
अभवत् तस्य संस्मृत्य कौमार्यागतमित्रताम् ॥ ३५ ॥

प्राप्तं पत्रं बापटेन धुण्डिना लिखितं यदा।
ज्ञात्वा तदाशयं चक्रे योग्योपायस्य चिन्तनम् ॥ ३६ ॥

पठित्वा बापटः प्राज्ञो न्यायाधीशस्य निर्णयम्।
प्राप ज्ञानं तयोर्नाम्नोरुभयोर्वादकारिणोः ॥ ३७ ॥

मध्यस्थस्य प्रयत्नेनाभवत् सन्धिस्तयोरिति।
कथ्यते पुनरुद्भूता मित्रता वादिनोस्तयोः ॥ ३८ ॥

चिन्तामणिप्रसादेन तिलकस्य सदिच्छया।
अजापालः कौशलेन बापटस्य गतव्यथः ॥ ३९ ॥

शशिमणिरिव दृष्ट्वाकाशमार्गे हिमांशुं
जलद इव विभिन्नैर्बर्हिकेकारवैर्वा।
द्रवति करुणचित्तं सज्जनस्यातिशीघ्र-
मसुखमयविलापैः प्राणिनो दुःखितस्य ॥ ४० ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे कदम्बक्षेत्राजपाल-
दुःखपरिहानिर्नाम एकोनचत्वारिंशस्तरङ्गः।

# चत्वारिंशस्तरङ्गः

कुलकर्णीकुले जातो वासुदेवाभिधो द्विजः ।
दोषभागवसद् दीर्घकालं पापिजनैः सह ॥ १ ॥

येरवूडाबन्धनागारे न्यायाधीशेन दण्डितः ।
नीतस्ततो ब्रह्मदेशे मंडालेबन्धनालयम् ॥ २ ॥

योजितः पाकनिष्पत्तौ तत्रस्थेनाधिकारिणा ।
तिलकार्थं प्रतिदिनं भोजनान्नं पपाच सः ॥ ३ ॥

सेवया वासुदेवोऽभूत् सेवकानां शिरोमणिः ।
कृतया भक्तिभावेन तिलकस्य महात्मनः ॥ ४ ॥

पद्धत्या दाक्षिणात्यानां भोजनं स्वादुरोचकम् ।
चिकीर्षुस्तिलकं प्राह कथ्यतां कृपया प्रभो ॥ ५ ॥

कानीह सेवनीयानि लवणव्यञ्जनानि च ।
कर्तव्यानि मया नित्यमस्याज्ञापालनोत्सुकः ॥ ६ ॥

न मे स्पृहा वस्तुषु केषु विद्यते
रुचिर्विशेषा न हि मिष्टवस्तुनि ।
मितप्रमाणेन घृतादिकानां
मदीयभोज्येषु कुरूपयोगम् ॥ ७ ॥

न तैलपक्वेषु तथा रुचिर्मे
यथा विदर्भस्थजनस्य तीव्रा ।
रसालवृक्षस्य फलं प्रियं मे
फलेषु पुगी च महाफलं च ॥ ८ ॥

निषिद्धं वैद्यशास्त्रे यदपथ्यं मधुमेहिनः ।
सर्वं मयापि वर्ज्यं तद् मधु स्वादु सशर्करम् ॥ ९ ॥

जिह्वालौल्यं कारणं देहभाजा-
मापत्तीनामामयानां च लोके ।
आहारे स्वे खाद्यपेयेषु नित्यं
तस्मात् सर्वैः संयमः पालनीयः ॥ १० ॥

आख्यायिकापुस्तकेषु बापटस्योपलभ्यते ।
वर्णनं दिनचर्यायाः कारागारे महात्मनः ॥ ११ ॥

वासुदेवकृतं सम्यग् वाचकानां श्रुतिप्रियम् ।
समाधिस्थस्थितप्रज्ञभाषायाश्च सुदर्शनम् ॥ १२ ॥

तिलकः प्रातरुत्थाय प्रथमं कायशोधनम् ।
ततः करोति कूर्चेण निर्मलं दन्तधावनम् ॥ १३ ॥

वन्दनं रविबिम्बस्य प्रातः स्तवनसंयुतम् ।
चषकस्थचहापेयं पिबति स्म पयोयुतम् ॥ १४ ॥

ग्रन्थावलोकनं कृत्वा कंचित् कालं विशालधीः ।
नित्यं जपति सुस्नातो गायत्रीं भक्तिसंयुतः ॥ १५ ॥

अपृच्छद् वासुदेवस्तमेकदा बन्धनालये ।
भगवन् ज्ञातुमिच्छामि वस्तु किं चिन्त्यते त्वया ॥ १६ ॥

पुण्यग्रामे निमग्नोऽहं सदा नैकेषु कर्मसु ।
मन्येऽत्र व्यवसायानां पालनं देवपूजनम् ॥ १७ ॥

शास्त्रनीतिसदाचारमान्यं यद् वर्तनं भवेत् ।
तत्त्वनिष्ठैः स्थितप्रज्ञैर्देवताचैव मन्यते ॥ १८ ॥

केनचित् कविवर्येण लिखितोऽनुभवः स्वयम् ।
आराधनं च ते शंभो यद् यत् कर्म करोम्यहम् ॥ १९ ॥

बहुभिः सूरिभिः प्रोक्तं तत्त्वं तद् वेदसंमतम् ।
अर्जुनायापि कृष्णेन गीतासु प्रतिपादितम् ॥ २० ॥

वदन्ति साधवः शुद्धस्वधर्माचरणं सदा ।
ईशस्येति महापूजा कर्मबन्धविनाशिनी ॥ २१ ॥

पुण्यग्रामे निवसता मया तदवलम्बनम् ।
कृतमीशप्रसादाय संसाराब्धितितीर्षुणा ॥ २२ ॥

अभावाद् व्यवसायानां तत्पूजाया असंभवः ।
वैपुल्यादिह कालस्य चिन्तनस्यावलम्बनम् ॥ २३ ॥

करोमीत्येव पूजार्थं ध्यायंस्तद् गुणवैभवम् ।
गायत्र्यादिश्रुतिश्रेष्ठचिन्तनेन जपेन च ॥ २४ ॥

प्राणिनो विपदाग्रस्तान् समुद्धर्तुं यतेत यः ।
उद्धरेदात्मनात्मानं तेन दिव्येन कर्मणा ॥ २५ ॥

तिलकस्यार्थगम्भीरं श्रुत्वामृतमयं वचः ।
प्राप प्रसन्नतां चित्ते वासुदेवः कृताञ्जलिः ॥ २६ ॥

कारागारे निबद्धानां दोषिणां भोजनं च यत् ।
रूक्षं तीक्ष्णं नीरसं च पलाण्डुलशुनान्वितम् ॥ २७ ॥

तिलकस्याशनस्यान्ते वासुदेवो जघास तत् ।
अनारोग्यकरं नित्यं शरीरापायकारकम् ॥ २८ ॥

तद् दृष्ट्वा तिलकः प्राह वासुदेवं कृताञ्जलिम् ।
मदर्थं पच्यते यद् वै तच्छेषं भोक्तुमर्हसि ॥ २९ ॥

सर्वेऽपि बन्दिशालायां न्यायाधीशेन दण्डिताः ।
दोषभाजः समानत्वं कारागारे समाप्नुवन् ॥ ३० ॥

मया सह निवासोऽस्ति यस्यास्मिन् बन्धनालये ।
मदन्नं पच्यते येन सरसस्निग्धपौष्टिकम् ॥ ३१ ॥

स कदन्नं समश्नाति पिष्टादुदकमिश्रितात् ।
जठराग्न्युपशान्त्यर्थं निर्मितं बन्दिपिष्टकम् ॥ ३२ ॥

दग्धत्वाद् हि क्वचिद् भागे कृष्णत्वं कृष्णवर्त्मना ।
अपक्वत्वाच्च शुक्लत्वं यस्यान्यांशे प्रदृश्यते ॥ ३३ ॥

कृष्णाङ्केन यथा चन्द्रो धवलैश्च मरीचिभिः ।
बन्दिगृहनिबद्धानां पिष्टकं शोभते तथा ॥ ३४ ॥

ओदनं तण्डुलानां च धूलिकङ्करमिश्रितम् ।
सत्त्वास्वादविहीनं यद् दुर्भक्ष्यं हि चतुष्पदाम् ॥ ३५ ॥

तादृशं भोजनं दृष्ट्वा वासुदेवस्य नोचितम् ।
इदमन्नमपथ्यं स्यात् तिलकः सदयोऽब्रवीत् ॥ ३६ ॥

हितमावश्यकं तस्य मदीयान्नस्य सेवनम् ।
उपायं चिन्तयामास तदर्थं भृत्यवत्सलः ॥ ३७ ॥

कारागारपतिं प्राप्य सौम्यशब्दैरुवाच सः ।
बन्दिनां वासुदेवं त्वं शीघ्रं कुरु निरीक्षकम् ॥ ३८ ॥

संमताभ्यर्थना तस्य वासुदेवो निरीक्षकः ।
बभूव तिलकान्नस्याधिकारी सेवनस्य च ॥ ३९ ॥

आधिक्यं शर्करांशस्य निजमूत्रे विलोकयन् ।
तिलको वर्जयामास तण्डुलानां च भक्षणम् ॥ ४० ॥

यवनिर्मितपक्वान्नसेवनं निश्चिकाय सः ।
चिकित्सकैः प्रशस्तानां फलानामपि भक्षणम् ॥ ४१ ॥

प्रशंसा यवधान्यस्य वेदग्रन्थेषु वर्तते ।
यवासि धान्यराजस्त्वं पावनो मुनिभिः स्मृतम् ॥ ४२ ॥

निर्णोदः सर्वपापानामिति मन्त्रकृतां मतम् ।
देवा यवप्रियाः सन्ति पितरस्तु तिलप्रियाः ॥ ४३ ॥

यवोदकं च देवानां पितॄणां च तिलोदकम् ।
कुर्वन्ति याज्ञिका नित्यं श्राद्धयज्ञादिकर्मसु ॥ ४४ ॥

देवान्नमिति निर्दिष्टं यवधान्यं महर्षिभिः ।
आयुर्वेदप्रणेतारस्तच्च शंसन्ति महौषधम् ॥ ४५ ॥

आहारसंयमस्तस्य वासुदेवेन वर्णितः ।
तिलकस्याद्भुतो भाति दुःसाध्यो योगिनामपि ॥ ४६ ॥

संयमेनैव रोगस्य स्तभ्नाति स्म विवर्धनम् ।
व्याधिं चकार निर्वीर्यं महात्मानेन कर्मणा ॥ ४७ ॥

पठनं वेदविद्यायाः पुस्तकानां निरन्तरम् ।
नित्यानित्यविवेकाय सतर्कपरिशीलनम् ॥ ४८ ॥

अभ्यासः साधनानां वै शमादीनां निसर्गजः ।
नियन्त्रणेन जिह्वादीन्द्रियाणां च विशेषतः ॥ ४९ ॥

संप्राप्तं मतिसामर्थ्यं देवाचार्यबृहस्पतेः ।
ज्ञानं तथा तपःसिद्धं ब्रह्मणे तत् समर्पितम् ॥ ५० ॥

कर्मयोगस्य शास्त्रं यत् तिलकेन विनिर्मितम् ।
आलोड्य सर्वशास्त्राणि पौरस्त्यानीतराणि च ॥ ५१ ॥

ब्रह्माण्डज्ञानगङ्गाया भाति मे सा प्रदक्षिणा ।
तिलकेन कृता प्राप्तुं निजोद्योगे महद् यशः ॥ ५२ ॥

ज्ञानिनामाशिषः प्राप्य नवसिद्धान्तनिर्मितौ ।
गत्वान्तं प्रस्तुतानां स समारेभे समुद्यमम् ॥ ५३ ॥

अवस्थां वर्णयामास वासुदेवो निरीक्षकः ।
मनोबुद्धिशरीराणां तिलकस्य महामतेः ॥ ५४ ॥

यदा मग्ने लेखने वा मनने वाचनेऽथवा ।
तिलकोऽवाप संपूर्णां देहव्यापारविस्मृतिम् ॥ ५५ ॥

मध्याह्नसमये प्राप्ते भोक्तुकामोऽभवद् गुरुः ।
स्वदतेऽन्नं स्म मौनेन पात्रे तस्यार्पितं मया ॥ ५६ ॥

पक्वं वै वासुदेवेन प्रमादाल्लवणं विना ।
वरान्नं शाकपक्वान्नं पेयं चाम्लद्रवप्लुतम् ॥ ५७ ॥

तदन्नं भक्षितं सर्वं तिलकेन यथार्पितम् ।
याचितं लवणं नैव नोक्तं खाद्यमसाध्विति ॥ ५८ ॥

यदा तद् वासुदेवेन भक्षितं भोजने स्वयम् ।
विज्ञातो लवणाभावो भक्षणीयेषु वस्तुषु ॥ ५९ ॥

तत्क्षणं दुःखितो भूत्वा त्यक्त्वा पात्रं समुत्थितः ।
वासुदेवः खिन्नमनाः संप्राप्तस्तिलकं प्रति ॥ ६० ॥

अपराधं पुनर्नाहं कुर्यामेवं क्षमस्व माम् ।
इत्युवाच ततो हास्यं बालः कृत्वोत्तरं ददौ ॥ ६१ ॥

जानेऽहं नापराधं ते किमर्थं याचसे क्षमाम् ।
वेपथुस्ते कथं जातः शोकहेतुं निवेदय ॥ ६२ ॥

उवाच वासुदेवस्तं सादरं हि कृताञ्जलिः ।
ऋषितुल्यं गुरुं पुण्यं शङ्कासाध्वसकातरः ॥ ६३ ॥

न हि पक्वपदार्थेषु लवणं निहितं मया ।
बभूवुस्तानि भक्ष्याणि रुचिहीनानि सर्वथा ॥ ६४ ॥

पदार्थोऽलवणो भुक्त इति न ज्ञायते मया ।
उवाच तिलकस्तस्मान्नापराधः कृतस्त्वया ॥ ६५ ॥

अभावादपराधस्य क्षमया न प्रयोजनम् ।
न क्षमाविषयोऽदण्ड्योऽपागो वाज्ञातदोषभाक् ॥ ६६ ॥

बुद्ध्या च्युतः स्वकर्तव्यात् स्वामिनो दण्डमर्हति ।
अज्ञानतः कृतं यत् तत् कर्मादण्ड्यं विदुर्बुधाः ॥ ६७ ॥

परपीडनमुद्दिश्य कृतं पातकमुच्यते ।
अज्ञानदोष इत्युक्तः संभूतो विस्मृतेस्तु यः ॥ ६८ ॥

विद्यते लवणस्यांशः सर्वेषु सृष्टवस्तुषु ।
जनैः क्षुधातुरैर्नित्यमुपयुक्तेषु भोजने ॥ ६९ ॥

भोज्यवस्तुगतक्षार आरोग्यप्रतिपत्तये ।
हितमेव वदन्तीति चरकादिचिकित्सकाः ॥ ७० ॥

तस्याधिकांशं सेवन्ते रुच्यर्थं बहुशो जनाः ।
मूलं हि सर्वरोगाणामप्रमाणान्नसेवनम् ॥ ७१ ॥

पूर्वमुक्तं मयैवैतद् नाहं रुचिवशो जनः ।
तदन्नमुत्तमं मन्ये येन संधार्यते वपुः ॥ ७२ ॥

रसेषु मधुरः श्रेष्ठ आम्लस्तस्मादनन्तरम् ।
कटुतिक्तौ विनिर्दिष्टौ ततः शास्त्रेष्वनुक्रमात् ॥ ७३ ॥

अन्ते क्षारकषायौ च मतौ वै षड्रसक्रमे ।
शरीरपोषणे तेषामुपयोगो यथाक्रमम् ॥ ७४ ॥

अन्नं ब्रह्मेति विज्ञाय द्विजो योऽन्नं समश्नुते ।
आप्नोत्येव पदं श्रेष्ठं मत्वा चान्नं व्रतं महत् ॥ ७५ ॥

न निन्द्यादन्नमित्याह श्रुतिर्विश्वहितैषिणी ।
जीवन्त्यन्नेन जातानि तदेवान्ते विशन्ति च ॥ ७६ ॥

तस्मादन्नं च भूतानां ज्येष्ठमित्युच्यते बुधैः ।
मूलं यत् सर्वभूतानां पोषणं जीवनं तथा ॥ ७७ ॥

कृत्वोत्पत्तिविचारं च गीतासु प्रतिपादितम् ।
अन्नं विभाति संबद्धं शाश्वतं यज्ञसंज्ञया ॥ ७८ ॥

कर्मणो यज्ञसंस्थाभूत् कर्म ब्रह्मोद्भवं मतम् ।
तज्जातमक्षरान्नित्यं वेदानां यत् परं पदम् ॥ ७९ ॥

चक्रमन्नसमारब्धं चक्रं ब्रह्मण्येवं समाप्यते ।
मध्यबिन्दुर्मखस्तस्मिन् यज्ञचक्रे प्रवर्तिते ॥ ८० ॥

अन्नब्रह्मनिरूपणेन कथयामास स्वभृत्योत्तमं
ज्ञानं मोहविनाशनं समुचितं यो वासुदेवाभिधम् ।
कारागारगतं नमामि परमं ज्ञानस्य धामोत्तमं
बालं तत्त्वविदां वरं स्थिरमतिं गङ्गाधरस्यात्मजम् ॥ ८१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे वासुदेवोपदेशसंज्ञश्चत्वारिंशस्तरङ्गः ।

# एकचत्वारिंशस्तरङ्गः

ज्ञानसत्रं समारब्धं पञ्चसंवत्सरात्मकम् ।
कृतस्तस्य समारोपस्तिलकाख्येन यज्वना ॥ १ ॥

पूर्वग्रन्थे समारम्भः सत्रस्यास्य प्रशंसितः ।
विसर्जनविधेर्वृत्तं कथयेऽहं समासतः ॥ २ ॥

'अस्तु ब्रह्मार्पणं तत् सत्' इत्युवाच महद् वचः ।
अन्ते गीतारहस्यस्य तिलको वेदधर्मविद् ॥ ३ ॥

तदेव ज्ञानसत्रस्य स्वात्माग्नावन्तिमाहुतिः ।
समागतास्तथा सत्रे प्रीता देवर्षिसाधवः ॥ ४ ॥

देवतासाधुसिद्धेभ्यस्ततश्चक्रेऽभिवादनम् ।
बद्धाञ्जलिः कृपाकाङ्क्षी प्रार्थयच्च तदाशिषः ॥ ५ ॥

तत्रागतसदस्यानां संख्यां कर्तुं न शक्नुमः ।
त्रिलोकीख्यातकीर्तीनां भूतमात्रदयावताम् ॥ ६ ॥

तेषां करोमि निर्देशमल्पानां च यथामति ।
भवेद् वै पावना मद्वाक् कीर्तनेनेति हेतुना ॥ ७ ॥

देवीभिः सहिता देवा मन्त्रब्राह्मणशंसिताः ।
मन्त्रकृदृषयः सर्वे चतुर्वेदपरायणाः ॥ ८ ॥

षडङ्गैः सहिता वेदा यास्कादिमुनिभिः कृतैः ।
दर्शनानि महाभाष्यव्याख्यावार्त्तिकवृत्तयः ॥ ९ ॥

व्यासो वेदान्तशास्त्रज्ञः सिद्धानां कपिलो गुरुः ।
दर्शनानां प्रवक्तारो ज्ञानविज्ञानपारगाः ॥ १० ॥

रामायणं भारताख्यमितिहासौ सुविश्रुतौ ।
विश्वानन्दप्रदातारौ वाल्मीकिव्यासनिर्मितौ ॥ ११ ॥

बुद्धः शाक्यो महावीर ऋषभश्च जिनेश्वरः ।
कुमारिलः शंकरश्च मध्वरामानुजौ शुची ॥ १२ ॥

नागार्जुनो वल्लभश्च गौडपादो विशालधीः ।
विद्यारण्यः सायणश्च श्रुत्यर्थप्रतिपादकः ॥ १३ ॥

शुकः सूतः शौनकश्च पुराणानां प्रकाशकाः ।
गुरुः शुक्रश्च चाणक्यो राजनीतिविशारदाः ॥ १४ ॥

पाश्चात्त्यदेशविद्वांसस्तत्त्वज्ञाः शास्त्रपारगाः ।
अरिष्टाटलमुख्याश्च विद्याभ्यासतपोधनाः ॥ १५ ॥

कालिदासः कविश्रेष्ठः शारदाकण्ठभूषणम् ।
भारविर्भवभूतिश्च बाणदण्डिसुबन्धवः ॥ १६ ॥

हर्षो यस्मिन्नेकसंस्थे वसतः श्रीश्च शारदा ।
माघः कर्ता महाकाव्यशिशुपालवधस्य च ॥ १७ ॥

अप्पय्यदीक्षितो वन्द्यो विद्वान् वै वेङ्कटाध्वरिः ।
जयदेवजगन्नाथौ शारदोद्यानकोकिलौ ॥ १८ ॥

त्रिविक्रमो विदर्भस्थो नासिकस्थश्च विठ्ठलः ।
पुष्पदन्तो गुमानिश्च वासुदेवाभिधो यतिः ॥ १९ ॥

भगीरथो यथा गङ्गां महाराष्ट्रसरस्वतीम् ।
आनयद् यो मध्यलोके विदर्भान् शारदाप्रियान् ॥ २० ॥

विवेकसिन्धुनिर्माता मुकुन्दः प्रथमः कविः ।
प्रसादेन जयत्पालस्तस्य लेभे स्थितिं पराम् ॥ २१ ॥

ज्ञानेश्वरो ज्ञानयोगभक्तियोगसमन्वयम् ।
शब्दार्थयोरलंकारैर्ज्ञानदेव्यां चकार यः ॥ २२ ॥

माधुर्यं मार्दवं वाचां माङ्गल्यं च त्रयो गुणाः ।
तद्ग्रन्थे विद्यते तेषां संगमो हृदयंगमः ॥ २३ ॥

एकनाथो रामदासो नामदेवश्च वामनः ।
तुकारामश्च भक्तानां विठ्ठलस्य शिरोमणिः ॥ २४ ॥

गुलाबाख्यो युवा ज्ञानी कन्यां ज्ञानेश्वरस्य यः ।
मत्वात्मानं केशवाय गोपीवेषेण चार्पयत् ॥ २५ ॥

दृश्या ये ज्ञानदृष्टीनामदृश्याश्चर्मचक्षुषाम् ।
असंख्याता महात्मानो लिङ्गदेहसमाश्रिताः ॥ २६ ॥

कारागाराश्रमं प्राप्ताः सिद्ध्यर्थं सत्रकर्मणः ।
ऊषुः सत्रान्तपर्यन्तं कर्तुं सत्रं यशोन्वितम् ॥ २७ ॥

एकैकामानयत् तत्र समिधं ज्ञानरूपिणीम् ।
यजमानसमारब्धज्ञानसत्रस्य पूर्तये ॥ २८ ॥

संप्रदायाशिषः सर्वे ऊचुरुच्चैः सभासदः ।
सत्याः सन्त्वाशिषोऽस्माकं विद्याभ्यासतपस्विनाम् ॥ २९ ॥

निजस्थानानि ते जग्मुः कामयानैश्च प्रस्थिताः ।
उत्तस्थुः स्वालयं गन्तुं विद्या अपि चतुर्दश ॥ ३० ॥

नमस्कृत्य दिशः सर्वाः संप्रयातास्तपस्विनः ।
विद्यादेव्यो ज्ञानिनश्च विश्वकल्याणचिन्तकाः ॥ ३१ ॥

तिलकः प्रेषयामास ग्रन्थान् पुण्यपुरीं प्रति ।
ज्ञानसत्रोपयोगार्थमानीतास्तेन ये पुरा ॥ ३२ ॥

चतुर्दशोत्तरैकोनविंशे खिस्तोत्तरे शके ।
प्रभाते प्रथमे यामे जूनमास्यष्टमेऽहनि ॥ ३३ ॥

बन्दिशालाधिपः प्राह संप्राप्य तिलकं प्रति ।
कर्तुं स्थानान्तरं सद्यः सिद्धो भवितुमर्हसि ॥ ३४ ॥

वृत्तं सर्वं प्रवासस्य जगाद तिलकः स्वयम् ।
तत्सारं संस्कृतैः शब्दैः कथयेऽत्र यथामति ॥ ३५ ॥

नभोमध्यात् पश्चिमाशां गते पूष्णयेकवाद्ने ।
मोटारवाहनं प्राप्तं स्थितं कारालयाङ्गणे ॥ ३६ ॥

आयातास्तेन यानेन तदा रक्षाधिकारिणः ।
मंडालेस्था रंगुनस्था नेतुं मां स्थानकं प्रति ॥ ३७ ॥

यथाविधि च विन्यस्य बन्दिशालाधिपस्तदा ।
पञ्चभ्यो रक्षकेभ्यो मां स्वकार्यार्थं न्यवर्तत ॥ ३८ ॥

आरूढा वाहनं सर्वे सुस्थिताश्च समाययुः ।
मंडालेस्थानकं शीघ्रमवतीर्णास्ततः पुनः ॥ ३९ ॥

वस्तूनि मम वासांसि तथा मे बन्दिसेवकः ।
नीतान्यपरयानेनाश्ववाह्येनाधिकारिणा ॥ ४० ॥

ततश्च प्राविशन् सर्वे वह्नियाने सुरक्षिताम् ।
द्वितीयश्रेणिकां कक्षां प्रवासाय ममैव वै ॥ ४१ ॥

उपविष्टेषु सर्वेषु कृत्वा कक्षां तदाखिलाम् ।
पिहितद्वारगोनेत्रां तत्र भृत्यगणः स्थितः ॥ ४२ ॥

रक्तवर्णशिरस्त्राणमुपयुक्तं पुरा मया ।
अधुना नोपयोक्तव्यमित्याहुर्बन्दिरक्षकाः ॥ ४३ ॥

रंगूननगरात् पूर्वमेकस्मिन् क्षुद्रखेटके ।
स्थानकेऽग्निरथोऽतिष्ठद् द्रागूचुर्बन्दिरक्षकाः ॥ ४४ ॥

गन्तव्यं वै रथात् सर्वैर्बहिरत्रैव सत्वरम् ।
वाहनं सिद्धमेवास्ति गन्तुमन्यत् स्थलं प्रति ॥ ४५ ॥

गुप्तरक्षादलस्यासीदधिकारपदस्थितः ।
संप्राप्तोऽसद्व्यवस्थार्थमुपमुख्यनिरीक्षकः ॥ ४६ ॥

तदङ्गुलिविनिर्दिष्टे वाहने सुस्थितोऽभवम् ।
अब्धिकूलस्थितं तेन नीतो रंगूनपट्टनम् ॥ ४७ ॥

किंचिद् मित्रं तदा नैवायातं दृष्टिपथं मम ।
जगन्मित्रोऽपि न प्राप्त उदयाचलशेखरम् ॥ ४८ ॥

आरूढा हि वयं सर्वे तीरस्थितलघूडुपम् ।
प्राप्तुं मेयोऽभिधां नावं समुद्रे दूरवर्तिनीम् ॥ ४९ ॥

बल्लवोऽपि ममानीतो मदीयैर्वस्तुभिः सह ।
केनाप्यन्योडुपेनैव नौकां यस्यां वयं स्थिताः ॥ ५० ॥

दृष्टानि प्रथमं नावि पुण्यग्रामनिवासिनाम् ।
रक्षाधिकारिणां तेषामाननानि मया तदा ॥ ५१ ॥

उज्जगाम क्षणे तस्मिन् हृदयानन्दवारिधिः ।
स्वकीयानां दर्शनेन दीर्घकालादनन्तरम् ॥ ५२ ॥

न मे ते हितकर्तारः प्रतिपक्षस्य सेवकाः ।
इति ज्ञात्वापि हर्षस्य व्यक्तोर्मिर्हृदयस्थिता ॥ ५३ ॥

ग्रामसंस्कृतिधर्माणां समानत्वेन जायते ।
कापि स्वकीयताबुद्धिर्भवेद् या वर्णनातिगा ॥ ५४ ॥

परित्यक्तस्वदेशानां देशबन्धून् विलोकितुम् ।
वर्तते कामना नित्यं समायातान् यदृच्छया ॥ ५५ ॥

मातृगेहाद् गता कन्या पतिग्रामनिवासिनी ।
मातृग्रामस्थबन्धूनां दर्शनस्याभिलाषिणी ॥ ५६ ॥

कामाल्लोभात् तथा मोहात् कलहस्योद्भवस्थितिः ।
तद्वशस्य मनोवृत्तिर्मालिन्येनावृता भवेत् ॥ ५७ ॥

सदैव बीजरूपेण विद्यते हृदयेषु सा ।
अत्युत्कटप्रसङ्गेषु प्रादुर्भवति रंहसा ॥ ५८ ॥

तेषां वै नामधेयानि चाधिकारपदानि च ।
बालेन पृच्छकेभ्यो वै कथितानि निजोत्तरे ॥ ५९ ॥

रिंगजोन्सावुभावास्तां गौरकायौ पदस्थितौ ।
भारतीयास्त्रयस्तत्र सदावर्ते च मारुतिः ॥ ६० ॥

दातेऽभिधश्च कोऽप्यन्यः सुरक्षादलसेवकाः ।
मराठीभाषणं तेषां जातं चित्तप्रमोददम् ॥ ६१ ॥

संरक्षणादिकर्तव्यमेभिः पञ्चाधिसेवकैः ।
अङ्गीकृतं वै देहस्य मेयोनौकास्थितस्य मे ॥ ६२ ॥

निर्गता जलयानाद् ये ब्रह्मदेशाधिकारिणः ।
समायाता रक्षणार्थं मंडालेबन्धनालयात् ॥ ६३ ॥

नौकायामुपविष्टाय मह्यं नैव निवेदितम् ।
कर्णधारेण नौकायाः कुत्र गच्छति नौरिति ॥ ६४ ॥

तथैव स्वीकृतं मौनं रक्षादलजनैरपि ।
यात्राकालान्तपर्यन्तं पञ्चभिः सहचारिभिः ॥ ६५ ॥

नाविकाः कर्णधारश्च सप्तरक्षार्थसेवकाः ।
एकश्चाहं बल्लवश्च मेयोनौकाप्रवासिनः ॥ ६६ ॥

कर्कशोऽपि ध्वनिर्नौकाप्रस्थानक्षणसूचकः ।
मधुरः स्वागतार्हो मे गन्तुमिच्छोश्च भारतम् ॥ ६७ ॥

प्रस्थितो भारतं गन्तुं दीर्घकालादनन्तरम् ।
तद्दुःसहवियोगस्य सद्योऽन्तश्च भविष्यति ॥ ६८ ॥

एवं सुखदभावानां मालिकातिमनोरमा ।
मदीयात्मप्रमोदाय नृत्यं चक्रे समुत्थिता ॥ ६९ ॥

नौका सप्तदिनान्तेऽगाद् मद्रपुर्यर्णवं प्रति ।
द्विदिनाभ्यां प्रवासस्य कालोऽधिकतरोऽभवत् ॥ ७० ॥

अग्नियानेन मद्रासात् प्रयाणस्य नियोजितः ।
कालस्तेनानुसंवादी प्रवेशो मद्रसागरे ॥ ७१ ॥

कर्तव्य इति संदेशो मेयोनौचालकं प्रति ।
प्रेषितश्चेति मे भाति मद्रासस्थाधिकारिभिः ॥ ७२ ॥

मेयोनौका स्थिता दूरं पत्तनादुपसागरे ।
आयातैका तरी क्षुद्रा तीरं नेतुं प्रवासिनः ॥ ७३ ॥

अनुज्ञातो बल्लवो मे ततो गन्तुं गृहं निजम् ।
रक्षादलस्य मुख्येन नौकास्थसहचारिणा ॥ ७४ ॥

नौकायाः स्थानकं प्राप्ता निशायामष्टवादने ।
अहं च रक्षकाः सर्वे पुण्यरंगूनवासिनः ॥ ७५ ॥

प्रविष्टाः स्थानकं गन्तुं वाहनं समुपस्थितम् ।
प्रमुखं लोहमार्गस्य मद्रपुर्यां प्रतिष्ठितम् ॥ ७६ ॥

पत्राग्निरथपुच्छस्थं द्वितीयश्रेणिकक्षकम् ।
वाहनादवतीर्णाश्च प्राविशाम पुरःस्थितम् ॥ ७७ ॥

स कक्षः पिहितद्वारगवाक्षो विहितस्ततः ।
रक्षाधिकारिभिः सर्वैराज्ञापालनतत्परैः ॥ ७८ ॥

कुत्र मां ते नयन्तीति प्रस्थितेऽप्यग्निवाहने ।
स्थानकात् तेषु केनापि मह्यं नैव निवेदितम् ॥ ७९ ॥

कर्तव्यकर्कशाः सर्वे शिलानिष्ठुरवृत्तयः ।
मानव्यभावनाशून्याः परशासनसेवकाः ॥ ८० ॥

यातश्च संगमे तेषां कालः शुष्को निरर्थकः ।
कारागारनिवासोऽपि वरीयान् क्षुद्रसंगमात् ॥ ८१ ॥

अज्ञातगमनस्थानश्चादृष्टसुजनः पथि ।
स्वस्यासने स्थितस्तूष्णीं विधिमार्गं विचिन्तयन् ॥ ८२ ॥

आक्रम्य तामिलांश्चान्ध्रांश्चौलान् पाण्ड्यान् पथि स्थितान् ।
कर्णाटकान् समुल्लङ्घ्य महाराष्ट्रे रथोऽविशत् ॥ ८३ ॥

श्रुत्वा स्थानकनामानि घोषितानि मुहुर्मुहुः ।
प्रवासगतदेशानामनुमानं कृतं मया ॥ ८४ ॥

बाष्पशक्तिरथोऽस्माकं संप्राप्यैव हडपूसरम् ।
समादेशाद् योजकस्य स्वल्पकालं स्थितोऽभवत् ॥ ८५ ॥

पूर्वं मह्यं प्रदत्तासीदवरोहणसूचना ।
त्वयावतार्यतामत्र चैवं रक्षाधिकारिणा ॥ ८६ ॥

अस्मत्कक्षादधोयाता वयं तत्स्थानकाद् बहिः ।
अधिकारिजनैर्नीता वाहनं प्राङ्गणे स्थितम् ॥ ८७ ॥

गैडरश्च सदावर्तै तृतीयोऽहं च सुस्थिताः ।
प्रस्थानाभिमुखे तस्मिन् स्यन्दने शीघ्रगामिनि ॥ ८८ ॥

अन्यस्मिन् वाहने मुख्यः पुणेरक्षादलस्य यः ।
स्थितस्तद् वाहनं जातमस्मन्मार्गनिदर्शकम् ॥ ८९ ॥

न ह्यद्यापि मया ज्ञातं गृहं गच्छामि वा न वा ।
पुणेनगरमार्गेण प्राव्रजद् वाहनद्वयम् ॥ ९० ॥

वाहनं च पुरोगामि मार्गादाशु न्यवर्तत ।
प्रविष्टायां पुण्यपुर्यामल्पकालादनन्तरम् ॥ ९१ ॥

अस्माकमपि तत्पश्चात् स्थितं यानं गृहस्य मे ।
पुरतो देहलीद्वाराद् द्वारपालेन रक्षितात् ॥ ९२ ॥

सूचितो गैडरेणाहं वाहनादवरुह्य च ।
उद्घाटय गृहद्वारमिति द्वारस्थसेवकम् ॥ ९३ ॥

तदैवाज्ञापयामास क्षणे तस्मिन् न मे वचः ।
सुप्तोत्थितेन वै तेन द्वारपालेन पालितम् ॥ ९४ ॥

गतश्चान्यं जनं द्रष्टुं तथाख्यातुं स मद्वचः ।
ग्रहीतुं च तदीयाज्ञां प्रवेशार्थं गृहे मम ॥ ९५ ॥

न्यूनः षाण्मासिकः कालः षड्वर्षादाह गैडरः ।
देहदण्डस्य कृपया विहितः शासनेन वै ॥ ९६ ॥

कृतज्ञोऽहं बहुतरं तस्मै शासनकारिणे ।
प्रदीयन्तां धन्यवादा इति स प्रार्थितो मया ॥ ९७ ॥

वन्दितोऽहं ततस्तेन प्राविशं मम सद्मनि ।
जयोऽस्तु स्वामिनोऽस्माकं द्वारपाल उदैरयत् ॥ ९८ ॥

व्याजेन गौप्यरक्षाया दर्शिता क्षुद्रभावना ।
प्रशासनेन मार्गेऽस्मिन् सर्वथा तिलकं प्रति ॥ ९९ ॥

पत्रेणान्तर्हिते पात्रे निधायाग्निं समानयेत् ।
यज्ञवेदिं प्रतिष्ठाया इति श्रुत्यनुशासनम् ॥ १०० ॥

नैव पूर्वं प्रतिष्ठायाः स्थण्डिले तस्य दर्शनम् ।
विहितं मन्यते तज्ज्ञैर्धार्मिकाणां सभासदाम् ॥ १०१ ॥

आनयंस्तस्य सदनं शासनस्याधिकारिणः ।
प्रदेशाद् ब्रह्मणस्तद्वत् तिलकं पावकोपमम् ॥ १०२ ॥

द्रष्टव्यो नैव लोकानां तिलको वाहनस्थितः ।
भवेत् प्रदीर्घयात्रायामिति भृत्याः प्रयेतिरे ॥ १०३ ॥

न वैशद्यमवाप्नोति हृदयं लघुचेतसाम् ।
मण्डूको वृषभत्वाय यथा नैव हि कल्पते ॥ १०४ ॥

विशुद्धिर्धातूनां प्रखरतमवह्नौ परिचिता
सुगन्धं ह्यग्निस्थोऽगुरुरनुपमं संजनयति ।
स्वयं त्यागं कृत्वा प्रकृतिसुखलाभाय यतते
जनो वन्द्यो नित्यं तिलकसदृशः प्रोज्झितसुखः ॥ १०५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे स्वदेशागमनाख्य एकचत्वारिंशस्तरङ्गः ।

द्वितीयः खण्डः समाप्तः ।

# टिप्पण्यः

[ अधोनिर्दिष्टेषु अङ्कद्वयेषु प्रथमः अङ्कः तरङ्गनिदर्शकः द्वितीयश्च श्लोकानिदर्शकः । ]

२६. १८

**बीजदशांशयोः**— बीजगणितं ( Algebra ) तथा दशमानपद्धतिः ( Decimal System ), तयोः ।

२६. २८

**कुलगुरुः**— परांजपेवंश्यः पुरुषोत्तमसूनुः रघुनाथशर्मा वयसा अशीतिवत्सरः सन्नपि पुणेविद्यापीठस्य कुलगुरुपदं ( Vice-Chancellor ) भूषितवान् ( ख्रिस्ताब्द १९५५–५८ पर्यन्तम् ) ।

२६. ३७

**शीर्षकं** " वै- इति अशुद्धं, शीर्षकं वै " इति शुद्धम् ।

२७. १५

**टाइम्साभिधदैनिके**— १८३८ ख्रिस्ताब्दे मुम्बय्यां टाइम्सनाम आङ्ग्लभाषायां दैनिकं वृत्तपत्रं प्राकाश्यं नीयमानं अद्यावधि प्रचाल्यते ।

२७. ४६

**विजापुरे...म्लेच्छनिर्मिते**— विजापुरे 'गोलघुमट' इति नाम इतिहासप्रसिद्धं प्रेक्षणीयं स्थलं विद्यते तस्मिन् ।

२७. ६७

**पौण्डानाम्**— पौण्ड ( Pound ) इति इंग्लंददेशस्य नाणकम् ।

२७. ६८

**गिनिशतम्**— गिनि इत्येतदपि इंग्लंददेशस्य सौवर्णं नाणकम् ।

२७. ७६

**धृत्वा तृणं स्वदंष्ट्रायाम्**— 'दातीं तृण धरून' इति महाराष्ट्रभाषायां वर्तमानस्य आभाणकस्य अयं संस्कृतानुवादः ।

२८. ३

**पूर्वग्रन्थे**— श्रीतिलकयशोऽर्णवस्य प्रथमे खण्डे ।

२८. २१

**पशुक्रीडाप्रदर्शनम्**— पशूनां क्रीडायाः प्रदर्शनम् । आङ्ग्लभाषायां सर्कस इति कथ्यते, यत्र अश्वगजव्याघ्रादीनां पशूनां विविधानां क्रीडानां प्रदर्शनं क्रियते मनुष्याणां शरीरपाटवं खेलाश्च प्रदर्श्यन्ते ।

२८. ३९

**तुकारामैः**— महाराष्ट्रदेशस्थः सुप्रसिद्धः शिवाजीसमकालीनः महान् साधुः तुकारामः येन अभङ्गवृत्ते विपुलं भक्तिपरं नीतिपरं च काव्यं रचितं यत् तुकारामगाथा इति प्रसिद्धमस्ति ।

२८. ५२

**मध्यमोत्तमशिक्षायै**— शिक्षालयानां विभागौ मध्यमविभागः उत्तमविभागश्चेति, आङ्ग्लभाषायां Middle School and High School इति कथ्येते ।

२८. ६९

**जबल्पुर्याम्**— मध्यप्रदेशे जबलपूरनामकं सुप्रसिद्धं नगरं, तस्मिन् ।

२९. १

**बाबामहाराजः**— कोल्हापुरस्थः एकः श्रीमान् गृहस्थः, लोकमान्यतिलकस्य परमं मित्रम् ।

२९. ३

**मृत्युपत्रम्** — स्वदेहपातानन्तरं स्वस्थावरजङ्गमसंपत्तेः कथं दायविभागः कर्तव्यः एतदर्थं यः लेखः क्रियते स मृत्युपत्रम् ( Will ) इति कथ्यते । बाबामहाराजमहोदयेन निपुत्रिकत्वात् स्वसंपत्तेः कथं विभजनं कर्तव्यं तद् मृत्युपत्रे लिखितमासीत् । तस्य व्यवस्थां कर्तुं पंचाश्च तेन नियुक्ताः येषु लो. तिलकः खापर्डे इत्यादयः पंचाः विश्वस्ताः आसन् ।

२९. १६

**ताई**— बाबामहाराजस्य द्वितीया धर्मपत्नी ताईमहाराज इति नाम्ना विश्रुता ।

२९. २२

**अवरंगपुरीम्**— मराठवाडाप्रदेशे औरंगाबादनाम प्रसिद्धं नगरम् ।

२९. २३

**स्वग्राचमम्** इति मुद्रणदोषः । स्वग्रामं च इति शुद्धम् ।

२९. २४

**महाराज्ञ्या**— बाबामहाराजस्य ताईनाम्न्या पत्न्या ।

२९. २७

**कैलासमन्दिरम्**— औरंगाबादनगरसमीपे सह्यपर्वतराजिमध्ये बह्व्यः गुहाः वर्तन्ते । तत्र पुराणकाले शिल्पिभिः नानाविधानि शिल्पानि निर्मितानि । तत्र वेरूळनाम्नः नगरस्य समीपे निर्मितं कैलासमन्दिरं नाम शिल्पम् अतीव प्रसिद्धमस्ति ।

२९. ३५

**आप्टनाय**— आप्टनः पुण्यपत्तने नियुक्तः जिल्हान्यायाधीशः, तस्मै ।

२९. ३९

**तदूर्ध्वम्**— प्रथमदत्तकविधानाद् अनन्तरम् ।

२९. ७१

**प्रोबेटस्य**— मृत्युपत्रमनुसृत्य या काचित् व्यवस्था कर्तव्या तद्विषये न्यायाधिकारिणः अनुमतिः आवश्यकी अस्ति । सा अनुमतिः 'प्रोबेट' ( Probate ) इति आङ्ग्लभाषायां कथ्यते ।

२९. ७२

**भूपाज्ञायाः**— भूपः कोल्हापूरनरेशः, तस्य आज्ञायाः ।

२९. ९४

**ब्रुइन**— ब्रुइननामकः आङ्ग्लशासकैः गुप्तचरविभागे गुप्तवार्ताहरस्य कार्ये नियुक्तः ( सी. आय. डी. ) अधिकारी ।

२९. ९६

**क्लेमंटम्**— प्रान्तपतिना न्यायकार्ये नियुक्तः एकः शासनाधिकारी ( Magistrate ) क्लेमंटः, तम् ।

२९. १००

**करंदीकर**— सातारानगरनिवासी रघुनाथ पांडुरंग करंदीकर इतिनामकः दादासाहेब इतिनाम्ना सुविख्यातः तिलकसुहृद्, न्यायविधिशास्त्रे निपुणः, सुप्रसिद्धः अधिवक्ता, तिलकेन प्रवादकार्ये नियुक्तः आसीत् ।

२९. ११५

**दाजी खरे**— मुम्बई-उच्चन्यायालये अधिवक्ता, तिलकस्य परमं मित्रं दाजी आबाजी खरे ।

२९. ११८

**वृष्टिरखण्डिता**— अखण्डिता वृष्टिः वैपुल्यार्थे। बहवः विद्युत्संदेशाः प्राप्ता इति ।

२९. १२३

**अण्णासाहेब**— महर्षि विनायक रामचंद्र पटवर्धन, अण्णासाहेब इति नाम्ना विख्यातः भिषग्वर्यः, क्रान्तिकारकाणां स्फूर्तिस्थानम्, विद्वान्, लोकनेता च ।

२९. १२६

**करंदीकर्खरे**— रघुनाथ पांडुरंग करंदीकर सातारानिवासी तथा च दाजी आबाजी खरे मुम्बईस्थः इति द्वौ तिलकस्य अधिवक्तारौ ।

२९. १२८

**ग्रन्थिज्वराभिघातेन**— ग्रन्थिज्वरः ज्वरविशेषः, आङ्ग्लभाषायां 'प्लेग' ( Plague ) इति कथ्यते । तस्याभिघातेन ।

३०. ५

**कर्झनः**— आङ्ग्लशासकैः भारतस्य शासने नियुक्तः राजप्रतिनिधिः ( Viceroy, Governor-General ) सर्वश्रेष्ठोऽधिकारी लॉर्ड कर्झनः ।

३०. ६

**माधवः**— महादेव गोविन्द रानडेमहाशयः।

३०. १४

**आङ्ग्लडचादिभिः**— साम्राज्यकाङ्क्षिणः यूरोपस्थाः आफ्रिकाखण्डे विविधान् प्रदेशान् आक्रम्य तत्रस्थितान् च जनान् विजित्य तत्र स्वसाम्राज्यं प्रस्थापितवन्तः। तेषां आङ्ग्लाः हॉलंडदेशस्थाश्च डचाः प्रमुखाः।

३०. १८

**क्रूगरादीनाम्**— क्रूगरः दक्षिण-आफ्रिकादेशे डचानां साम्राज्ये राजप्रमुखः आसीत्।

३०. २१

**जङ्गमा**— महाराष्ट्रभाषायां 'गनिमी कावा' इति कथ्यते।

३०. ३२

**कॉटनम्**— आङ्ग्लशासकैः शासनकार्ये नियुक्तः एकः अधिकारी सर हेन्री कॉटन्, तम्। सेवानिवृत्तेः पश्चात् स राष्ट्रीयसभाध्यक्षपदे १९०५ खिस्ताब्दे नियुक्तः।

३०. ४९

**अवरंगस्य**— औरंगजेबस्य।

३०. ५१

**असत्यं कर्झनोऽवदत्**— भारते राजप्रतिनिधित्वेन नियुक्तेः पूर्वं कोरियादेशस्य महामन्त्रिणे कर्झनेन स्ववयः असत्यत्वेन कथितम् इति मोतीलालघोषेण प्राकाश्यं नीतम्।

३०. ५५

**कर्णफूशा**— चीनदेशस्थः कन्फ्यूशियस् (Confucius) इतिनाम्ना सुविख्यातः तत्त्वचिन्तकः।

३०. ५७

**पालिस्तानस्थनगरम्**— आङ्ग्लभाषायां पॅलेस्टाईन इस्रायलो वा कथ्यते। तस्मिन् देशे जेरुसलेम इति विश्रुतं नगरम्।

३०. ६१

**मायूकेव्हीली**— Machiavelli इतिनामकः इटालीदेशस्थः राजनीतिज्ञः १५२७ खिस्ताब्दे पञ्चत्वं गतः। 'प्रिन्स'नामकः तस्य राजनीतिसंबद्धः ग्रन्थः सुविख्यातः।

३१. ११

**दफ्तरी**— केशव लक्ष्मण दफ्तरी, नागपूरस्थः दार्शनिकः विशेषतः खगोलशास्त्रज्ञः पञ्चाङ्गसाधनकार्ये निपुणः।

३१. १४

**रघुनाथः**— रघुनाथशास्त्री पटवर्धनः, विख्यातः ज्योतिर्विद्, निपुणः तिलकपञ्चाङ्गकर्ता।

३१. ३६

**बिल्वपूराश्रमम्**— वङ्गदेशे कलकत्तानगरसमीपे बेलूर नाम उपनगरं, तत्र स्थितं महर्षेः रामकृष्णपरमहंसस्य आश्रमः, तम्।

३१. ४७

**माताजिसंज्ञका**— माताजी इति नाम्ना प्रसिद्धा झांशीराज्याः लक्ष्मीदेव्याः भागिनेयी।

३१. ५०

**तंजावरे**— तंजावरनामकं दक्षिणभारते प्रसिद्धं नगरम्। छत्रपतिशिवाजीमहाराजस्य भ्राता व्यंकोजीनामा तत्र राजा आसीत्।

३१. ६०

**काष्ठमण्डपे**— नेपालदेशस्थकाठमांडूनगरे।

३२. ६

**आङ्ग्लवस्त्रशिरस्त्राणहोलिका**— आङ्ग्लदेशे निर्मितानि वस्त्राणि शिरस्त्राणानि शिरोवेष्टनानि च तेषां होलिका दहनम्।

३२. २३

**मुंजेखर्पर्योः**— बाळकृष्ण शिवराम मुंजे नागपूरस्थः तथा च गणेश श्रीकृष्ण खापर्डे अमरावतीस्थः, तयोः।

३२. २४

**मुंजेठेंगड्युधोपाह्वाः**— मुंजे, धुंडीराजपंत ठेंगडी, नीलकंठराव उधोजीमहाशयाः इति। नारायणराव वैद्य, नारायणराव आळेकर, पंडित कृष्णशास्त्री घुले, रा. ब. पंडित, भवानीशंकर नियोगी, गोपाळराव ओगले ( 'महाराष्ट्र' इति वृत्तपत्रस्य संपादकः ), अच्युत बळवंत कोल्हटकर, गोविंदराव देशमुख, भाऊजी कावरे ( कावळे इति अशुद्धम् ), भंडारके, इत्यादयः नागपूरस्थाः ख्याताः तिलकनिष्ठाः नेतारः कार्यकर्तारश्च।

३२. २९

**जोशीकुलोद्भवः**— 'वीर' वामनराव जोशी, अमरावतीस्थः लोकनेता।

३२. ३६

**बाबाख्यः**— नरहरि शिवराम परांजपे, 'तपस्वी' इति विज्ञातः लोकनेता।

३३. १६

**आशुतोषः**— सर आशुतोष मुखर्जी कलकत्ताविद्यापीठस्य कुलगुरुः आसीत्।

३३. ४८

**श्रेणयः**— पाठशालायां पठतां विद्यार्थिनां विभागाः।

३३. ७९

**फुल्लरः**— सर बामफील्ड फुल्लर, वङ्गदेशे निर्मितस्य उपप्रान्तस्य पूर्ववङ्गस्य राज्यपालः।

३३. १२७

**बारीसाले**— पूर्ववङ्गप्रदेशे विख्यातं नगरं, तत्र।

३३. १३०

**माहंमदो रसूलः**— बॅ. रसूल इस्लामधर्मीयः, बारीसालनगरे वङ्गभङ्गविषये आन्दोलनार्थं १९०५ खिस्ताब्दे एका परिषत् स्थापिता आसीत् तस्याः अध्यक्षः।

३३. १५६

**सतपूटाद्रि**— सातपुडापर्वत इति मराठीभाषायाम्।

३३. १६२

**काळभालाविहार्यादि**— काळ, भाला, विहारी, इति मराठीभाषायां प्रकाशितानि वृत्तपत्राणि।

३३. १८८

**भवानी**— छत्रपतिशिवाजीमहाराजस्य भवानीदेव्या प्रसादीकृतः खड्गः तन्नाम्ना एव ज्ञायते।

३३. २२१

**महाजनगृहे**— बलवंतराव महाजन इत्येतेषां गृहे।

३४. २१

**पंढरीशस्य**— पंढरपूरनामके नगरे श्रीविठ्ठलस्य।

३४. २५

**एकादश्या**— एकादशीव्रतम्, तेन।

३४. २६

**पाण्डुरङ्गम्**— भगवन्तं विठ्ठलम्।

३४. ३२

**गङ्गाधरादिमित्राणाम्**— गङ्गाधर बालकृष्ण देशपांडे, तिलकस्य बेळगावपुरनिवासि परमं मित्रम्।

३४. ५४

**आङ्ग्लहिन्दैः**— 'अँग्लोइण्डियन' वृत्तपत्राणां चालकैः।

३४. ६५

**हिंड्मनेन**— आङ्ग्लदेशे समाजवादस्य पुरस्कर्ता, दादाभाई नवरोजीमहाशयानां समकालीनः, तेन।

३५. २१

**शिवानन्दः**— शिवानन्दनामा स्वामी संन्यासी अमरावतीस्थः राष्ट्रीयान्दोलने प्रमुखः कार्यकर्ता।

३५. २३
हरिकिशोरेण— विदर्भदेशे यवतमाळनगरे प्रकाशितं हरिकिशोरनामकं वृत्तपत्रं, तेन ।
३५. ४५
जसवंतसिंग— पंजाबप्रान्तस्य क्रान्तिकारी नेता। 'गदर' आन्दोलनस्य एकः प्रमुखः ।
३५. ५५
अजित्सिंह— पंजाबप्रदेशस्य क्रान्तिकारी नेता, भगतसिंगस्य पितृव्यः ।
३५. ८५
पिण्डि— रावळपिंडीनाम नगरम् । अधुना पाकिस्ताने वर्तते ।
३५. १४०
स्वा० सदस्यानाम्— स्वागतसभायाः सदस्यानाम् ।
३५. १४३
स्वा० सभा— स्वागतसभा ।
३५. १६९
सुरते— सुरतनामके नगरे ।
३५. १८७
घोषः— डॉ. राशबिहारी घोष, विधिशास्त्रे नदीष्णः ।
३५. १८८
लज्जापतेः— लालालजपतरायस्य ।
३५. २१८
माळवी— सुरतराष्ट्रीयसभायाः स्वागताध्यक्षः ।
३५. २२८
अरविन्दः— इति शुद्धम् ।
३५. २८१
निषादस्वनम्— उच्चरवम् ।
३५. ३०४
आक्रमणस्य— यथा छत्रपतिना शिवाजीमहाराजेन सुरतनगरमाक्रम्य तस्मात् विपुलं धनं नीतमासीत् तथैव अधुनापि तिलकपक्षीयाः आक्रमणशीलाः शिवाजीवत् आचरन्ति इत्यर्थः ।
३६. ५१
विनायकः— विनायक दामोदर सावरकर ।
३६. ५२
श्यामकृष्णः— पंडित श्यामजी कृष्ण वर्मा ।
३६. ५५
धूलिकापुरीम्— खानदेशविभागे धुळे नाम नगरी, ताम् ।

३६. ५६
देवादिभिः— शंकर श्रीकृष्ण देव समर्थभक्तः, तत्प्रभृतिभिः ।
३६. ७१
सुरतक्षोभतः— सुरतनगरे राष्ट्रीयसभायाः यद् अधिवेशनम् १२०७ ख्रिस्ताब्दे अभवत् तस्मिन् राष्ट्रसभा भग्ना । तेन भङ्गेन समुत्पन्नक्षोभात् ।
३६. १२०
एकनाथः— महाराष्ट्रोद्भवः क्षमाव्रतः सत्पुरुषः ।
३६. १२६
रामकृष्णः— डॉ. रामकृष्ण गोपाळ भांडारकरमहोदयाः ।
३६. १२८
गोपालिलिखितम्— ना. गोपाळ कृष्ण गोखलेमहाशयेन लिखितम् ।
३६. १४४
मॅक्नीकलः— कोऽपि ख्रैस्तधर्मप्रचारकः ।
३६. १५७
विजापूरकरैः— विष्णु गोविंद विजापूरकरमहाशयैः ।
३६. १५९
तळेगावे— तळेगावग्रामः पुणेनगरीतः दशक्रोशान्तरे वर्तते, तस्मिन् ।
३६. १५९
पैसाफंडनिधेः— स्वदेशभक्तिप्रेरितात् प्रत्येकाद् एकमेकं पैसानाणकं स्वीकृत्य संपादितः महान् निधिः। तद्द्वारा तळेगावग्रामे काचशाला संस्थापिता ।
३६. १६९
विभक्तेरधिकाराणाम्— शासनाधीनानाम् अधिकाराणां विभक्तये किं कार्यम-कार्यं वा का च योजना स्वीकार्या भवेद् इति विचारविनिमयहेतुना शासनेन निर्मितमेकं मण्डलम्; Decentralisation Commission.
३६. २०१
जोशी— गणेश वेङ्कटेश जोशीमहाशयः पुण्यपत्तनस्थः अर्थशास्त्रनिपुणः सर्वेषां विश्वास्यश्चासीत् ।
३६. २०४
जे इति— उपर्युल्लिखितः जोशीमहाशयः वृत्तपत्रेषु विविधेषु विषयेषु 'जे' इति कृतकनाम्ना लेखनम् अकरोत् ।
३६. २७०
अकोलास्थाः— अकोला नाम नगरं विदर्भदेशे सुप्रसिद्धम्, तत्रस्थाः ।
३६. २७२
गजाननमहाराजः— विदर्भेषु शेगावनाम्नि क्षेत्रे गजाननमहाराजः नाम कोऽपि महायोगी न्यवसत् ।

३६. २७३

'तादृशा'— अयं मुद्रणदोषः। तादृशी इति शुद्धं रूपम्।

३७. १२

सन्ध्या, युगान्तरम्, वन्देमातरम्— सन्ध्या, युगान्तरम्, वन्देमातरम्, इति वृत्तपत्राणि वङ्गप्रदेशे वङ्गभङ्गकाले विश्रुतानि।

३७. २३

हिन्दस्वराज्यम्, विहारी, अरुणोदयः— हिन्दस्वराज्य, विहारी, अरुणोदय, इति वृत्तपत्राणि महाराष्ट्रदेशे मराठीभाषायां प्रसिद्धानि।

३७. २४

काळपत्रे— पुणेनगर्यां मराठीभाषायां प्रसिद्धं काळनामकं वृत्तपत्रं शिवराम महादेव परांजपेमहोदयैः संपादितमासीत्, तस्मिन्।

३७. ४५

सरदारगृहे— मुम्बापुर्यां तिलकप्रभृतीनां निवासस्थाने।

३७. ६४

प्राच्यभाषानुवादी— Oriental Translator.

३७. ९०

बाप्टिस्टेन— बॅ. जोसेफ बॅप्टिस्टा इत्येतेन।

३७. ९८

प्रक्षेपणं...— Casting pearls before the swine.

३७. १०५

अंडर्हडहेंपाः सनोत्तराः— अंडर्सन, हडसन, हेंपसन, एते त्रयः नवपंचेषु समाविष्टाः।

३७. २२५

मोर्ले— Sir John Morley, Secretary of State for India.

३७. २७०

माल्कमामासजोबर्टनार्टनेलिपस्तनादयः— एते विख्याता राजनीतिज्ञाः।

३७. २९७

आङ्ग्लहिंदीपत्रकाराः— अॅंग्लोइंडियनवृत्तपत्रकाराः।

३७. ३४१

डावरः— मुम्बईवरिष्ठन्यायालयस्य एकः न्यायाधीशः।

३७. ३६१

गणेशम्— गणेश बाळकृष्ण खापर्डे इत्येतम्।

३७. ४१२

वह्निवाहनम्— अग्निरथः, 'आगगाडी' इति मराठीभाषायाम्।

३७. ४४४

**सरोजिनी**— सरोजिनी नायडू, सुविख्याता कवयित्री राष्ट्रीयान्दोलने च प्रमुख-कार्यकर्त्री ।

३७. ४४८

**अग्नियन्त्रस्य**— 'बन्दूक' इति मराठीभाषायां उच्यते, तस्य ।

३७. ४६३

**मंडालयम्**— मंडाले नाम नगरं ब्रह्मदेशे वर्तते । तत्रस्थं कारावासम् ।

३८. २७

**कृष्णभारती**—श्रीमद्भगवद्गीता ।

३८. २७

**रहस्यस्य**— तिलकविरचितस्य 'गीतारहस्य'स्य ।

३८. ४७

**जयन्तेन**— लोकमान्यतिलकस्य नप्ता श्रीधरसुतः जयन्तः, अधुना 'केसरी'-संपादकः, तेन ।

३८. ६५

**मधुमेहः**— मधुमेहनामकः दुर्धरः रोगः ।

३८. ७७

**देहली**— दिल्ली इति प्रसिद्धा नगरी भारतस्य राजधानी ।

३८. १३९

**ओङ्कारसमीपगाम्**— पुण्यपत्तने ओङ्कारेश्वरनामकस्य शिवमन्दिरस्य समीपे मुठानद्याः तीरे विद्यमानाम् ।

३९. १२

**अजिंठाद्रेः**— यत्र पुराणकालीनाः अत्युत्कृष्टाः अवशेषाः गुहासु वर्तन्ते ।

३९. २५

**क्ष्मि**— क्ष्म् शब्दस्य सप्तमी, पृथिव्यामित्यर्थः ।

३९. २७

**वाक्कील**— न्यायालयेषु विधिविषयेषु अधिवक्तव्यं कर्तुं नियुक्तः, वकील इति मराठीभाषायां कथ्यते ।

**यवत्माळे**— विदर्भेषु यवतमाळनामकं नगरमस्ति, तस्मिन् । यवतमाळनगरमेव कंचित् कालम् अणेमहोदयानां कार्यभूमिरासीत् ।

४०. ८

**पुगी**— 'पूगं' इति शुद्धम् । पूगं नाम एकः फलविशेषः । मराठीभाषायां 'सुपारी' इति कथ्यते ।

४०. ११

आख्यायिकापुस्तकेषु— सदाशिव विनायक बापट इत्येतेन लोकमान्यतिलक-विषये विविधैः जनैः मराठीभाषायां लिखिताः कथाः आख्यायिकाः वा संगृहीताः। ताः त्रिषु खण्डेषु प्रकाशिताः, तेषु ग्रन्थेषु।

४०. ३२

बन्दिपिष्टकम्— कारालयेषु बन्दिभ्यः ज्वारी, मका, इत्यादिधान्यानां पिष्टकं जलमिश्रितं प्रातःसमये खाद्यमिति दीयते।

४०. ५२

प्रदक्षिणा— अयं शब्दः प्रदक्षिणक्रिया इत्यर्थे उपयुक्तः।

४१. ४२

गोनेत्रम्— गवाक्षः।

४१. ७७

पत्राग्निरथः— Mail-train.

४१, ८५

हडप्सरम्— पुणेनगरस्य समीपे हडपसरनामकम् अग्निरथानां विश्रामस्थानं वर्तते, तदिति।

श्रीकृष्णानन्दसरस्वतीस्वामी (काशी)
लो० तिलकः (खिस्ताब्दः १८९८) च ।





डॉ. भांडारकराध्यक्षत्वे पुण्यपत्तने मद्यपाननिषेधसभा (२३–४–१९०८)
( लो० तिलकस्य दक्षिणपार्श्वे रे॰ह० मॅक्निकलः )

मुम्बय्यां १९०८ ख्रिस्ताब्दे राष्ट्रीयपक्षसभायां बाबू अरविन्दघोषः अध्यक्षः व्याख्याता च तिलकः ।
घोषस्य दक्षिणपार्श्वे डॉ० गोपालनामा देशमुखमहोदयः ।





( १ ) लालालजपतरायः  ( २ ) लो० तिलकः  ( ३ ) विपिनचन्द्रपालश्च



मंडालेकारालये तिलकस्य वसतिस्थानम् (१९०८–१९१४)



मंडालेकारालये स्नानस्थलम् ।

